हरिदास संस्कृत ग्रन्थमाला १४



॥ श्रीः ॥

# काव्यमीमांसा

संस्कृत-हिन्दी-व्याख्याद्वयोपेता

( पञ्चमाध्यायपर्यन्ता )






चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

१४

कविराजश्रीराजशेखरविरचिता

# काव्यमीमांसा

संस्कृत-हिन्दीव्याख्याद्वयोपेता

( पञ्चमाध्यायान्ता )

व्यख्याकारः

श्री पं० मधुसूदनमिश्रः

काशीहिन्दूविश्वविद्यालयस्य संस्कृतकालेजाध्यापकः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७७

THE

# HARIDAS SANSKRIT SERIES

14

# KĀVYAMĪMĀṀSĀ

OF

RAJASEKHARA

Edited with

*The Sanskrit and Hindi Commentaries*

BY

S'RĪ MADHŪSUDANA MIS'RA



THE

Chowkhamba Sanskrit Series Office

VARANASI-221001

1977

# आमुखम्

## म. म. श्रीबालकृष्णमिश्रः

काशीहिन्दूविश्वविद्यालयप्रधानाचार्यः

साहित्याचार्यवर्यश्रीमधुसूदनमिश्रेणाहिताग्निना व्याख्यानसामान्यशून्यतया स्थलविशेषेष्वर्थतत्त्वं मनागप्यनाकलयतामन्तेवासिनामसहनीयक्लेशावेशादुद्दिधीर्षया स्वकीयशेमुषीबलं केवलमवलम्ब्य निर्माणकर्मीकृता प्रथितग्रन्थान्तरसंवादविधुरतयाऽपि दुरधिगमायाः काव्यमीमांसायाः सरलतरपदा विशदीकृताशया लेखकपरम्पराप्रमादसमुत्पादिताशुद्धिबहुलतामुपन्यासपुरस्सरं युक्तिप्रदर्शनेन निरस्यानुकूलमूलपाठमपि परिकल्पयन्ती विवृतिस्तेषामितरेषामपि साधारणमतीनामतितमामुपकारिका भविष्यतीति दृढतरो मे विश्वास इति ।

—बालकृष्णमिश्रः

## कतिपयप्ररोचनाशब्दाः

विदितमेव तत्रभवतां भवतां गीर्वाणवाणीवर्णनानिपुणानां परमपवित्रचरित्र चित्रितपत्रनिकराणां धीवराणां पूर्वेषां समेषां भारती रतिप्रदापि विरतिप्रदा सरला विषमेति । तत्रापि नवीननवीनमार्ग ( विशिष्टराजमार्ग ) जिगमिषावतः चिकुरनिर्मोकनिष्कोषणवद्वस्तुतत्त्वचिन्तकस्य राजशेखरस्य सा भगवती कीदृशी विलक्षणा अपूर्वनूतनोल्लेखशालिनी इत्यपि न तिरोहितं तत्तद्ग्रन्थपरिशीलन-सेवाहेवाकिमनसां विदुषाम् । प्रस्तुतस्यास्य ग्रन्थस्य प्रणेता महाकवी राजशेखरः यथाऽयमप्रतिमप्रतिभाशाली तथा 'मुरारेस्तृतीयः पन्था' इतिवत् पदार्थसार्थलेख-पद्धतिधौरेयः । तथाहि काव्यमादौ कथं प्रसृतमिति जिज्ञासायामिदमेकमेव प्रत्न-मुतरं वाल्मीकिरेव पूर्वपुरुषः काव्यप्रवर्तकेषु, अयमेव भगवानादिकविः, अस्यैव कृतिः आदिकाव्यं, ब्रह्मण एव छन्दसा छन्दस्वती वाक् उदभूदस्य मुखादिति पादमं कथानकमासीत् । किन्तु महाशयस्यास्य कृतिमवलोकयतां मनसि सर्वं प्रागुक्तमपहस्तितं भवति । अनेनास्य क्रम एवमुपक्रान्तः । पूर्वं शिवेन ब्रह्मादिभ्यः, ब्रह्मणा च स्वशिष्येभ्यः काव्यमुपदिष्टम् । ब्रह्मशिष्येषु कश्चित्काव्यपुरुषोऽवर्तत । अनेनैव लोके काव्यमादौ प्रसारितमिति । अत्र वाल्मीकेर्नामापि न निर्दिष्टम् । प्रत्युत काव्यपुरुषवृत्तान्तावसरे प्रसंगप्राप्तः सवाल्मीकिः पुत्रावेषणकर्व्यै सरस्वत्यै तद्वृत्तमचकथत् । श्रुततद्वृत्तया तया प्रसन्नया तस्मै निभृतं छन्दोबद्धा वाक् प्रदत्ता इत्युपवर्णितम् । अथ वेदाङ्गानां निरूपणावसरे 'उपकारकत्वादलंकारः सप्तममङ्गम्' इति अलंकारस्य सप्तमाङ्गत्वनिरूपणम् । चतुर्दशविद्यास्थानानां निर्देशप्रसङ्गे 'सकलविद्यास्थानैकायतनं पञ्चदश काव्यं विद्यास्थानम्' इति काव्यस्य पञ्चदशविद्यास्थानत्वनिर्देशः, विद्यानां व्याख्यावसरे 'पञ्चमी साहित्यविद्या' इति साहित्यस्य पञ्चमविद्यात्वोक्तिः सर्वतः प्रथममनेनैव प्रादु-र्भाविता । किं बहुना, एतत् सिषाधयिषुणैवानेन शास्त्रनिर्देशाख्यो द्वितीयाध्यायो न्यरूपि । अन्यथा केवलं शास्त्राणां नामगणनायाः कोऽभिप्रायः । नहि प्रमेय-मागमन्तरा नाममात्रेण शास्त्रैः काचिदपीष्टसिद्धिः । अथ 'कोऽयं काव्यपुरुषः' इति जिज्ञासायां मार्गमाणैरप्यस्माभिः नहि कुत्रापि एतादृशस्तृतीयाध्यायोपवर्णितो वृत्तान्तोऽलम्भि । कारयित्रीभावयित्र्यौ द्वे प्रतिभे दश च कवेरवस्था भवन्ति इति

सर्वमस्यैव प्रतिभाप्रसूतिमिति आकलये। किमस्य मूलमिति विचारे तु स्पष्टमेव प्रतिपत्तुं शक्यते यदस्य लेखनं सत्यं शिवं सुन्दरं चेति। अनुप्राणितमेतदस्माभिस्तत्तत्प्रसङ्गे। पाकस्वरूपनिरूपणं विवेचापूर्वकं विशद्य दर्शयन् यादृशी विधा प्रदर्शिता नेदृशी ग्रन्थकारैरन्यैरिति सोत्साहं वक्तुं प्रभवामः। यो हि प्रदेश एनं महापुरुषमाविर्भावयामास स पुण्यभक्तमो देशः कस्मिन् दष्टिऽयं भुवमवततार इत्यादि सर्वं बहुवक्तव्यत्वादेतद्ग्रन्थीयसम्पूर्णमुद्रणसमापनानेहसि विवेक्ष्यामहे बिस्तृतप्रस्तावनायाम्। पठनपाठनादिषु विरलप्रचारतया दुरुहस्य महतः प्रबन्धस्य मादृशैः प्रणेतुमशक्यस्यापि यट्टीकाप्रणयनं तत्र तत्रभवतां गुरूणां प्रधानाध्यापकपदेन विश्वविद्यालयमलं कुर्वतां श्रीबालकृष्णमिश्रशास्त्रिणामनुग्रह एवाग्रहग्रहिलोऽभवत्। येनात्र प्रवृत्तानां कृते सूर्यस्यारातिकप्रदीप इव ममैष प्रयत्नः स्यादिति सम्भावये।

यद्यपीदमीयं सम्पादनं मम कार्यान्तरव्यासक्तचेतस्कतया नातिविशुद्धं जातं तथापि गुणैकपक्षपातिनः तत्त्वभिनिवेशिन सहृदयाः क्षमिष्यन्ते। इत्येष मामकीनो निश्चयः।

यद्येतया विवृत्या छात्राणामन्येषां केषांचन कीदृशोऽप्युपकारः स्यात्तर्हि स्वं कृतार्थं मंस्ये।

अस्माकमादर्शपुस्तकं तु दलालमहोदयमुद्रापितनेव। एतत्पुस्तकोद्धरणकर्मणा दलालमहाशयेन संस्कृतसाहित्यस्य कियानुपकारः कृतस्तदर्थं शुष्कधन्यवादमन्तरा नहि किमपि प्रत्युपकर्तुं शक्येत।

इदानीमतिदुष्करेपि काले संस्कृतभाषागौरवसमुज्जृम्भणकृते बद्धपरिकराः चौखम्बापुस्तकालयाध्यक्षाः श्रेष्ठिजयकृष्णदासगुप्तादयोऽपि धन्यवादपात्राणि।

सर्वोऽपि प्राणिवर्गो यावद्बुद्धिबलोदयं चेष्टते तथापि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
किन्तु—हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥ इति

निवेदयति

**विदुषामाश्रवो मधुसूदनः**

॥ श्रीः ॥

# काव्यमीमांसा

## संस्कृत-हिन्दीव्याख्याद्वयोपेता

### कविरहस्यम्

### अथ प्रथमोऽध्यायः

## शास्त्रसंग्रहः १

अथातः काव्यं मीमांसिष्यामहे, यथोपदिदेश श्रीकण्ठः परमेष्ठिवैकु-

---

अग्निष्टोममुखा यज्ञाः संस्कारा देवता अपि। यमाश्रित्योपजीवन्ति सोऽग्निः शं विदधातु मे॥
मीमांसान्यायशास्त्रज्ञं वेदवेदान्तपारगम्। पितरं रामजीलालं नमामि गुणिनां वरम्॥
सर्वतन्त्रस्वतन्त्राणां श्रीदामोदरशास्त्रिणाम्। गुरूणां चरणौ वन्दे मध्वाचार्यपदे स्थितौ॥
स्तौमि देवीप्रसादं यश्छात्राणां वृन्दशः कृते। तरणिः सन्तितोपूर्णां साहित्यामृतसागरं॥
बालकृष्णगुरुन्नौमिसर्वविद्यास्वरूपिणः। अज्ञानासुरनाशाय कृष्णो व्याजेन सोऽतरत्॥
यद्वचोमन्थमादाय गम्भीरं शास्त्रवारिधिम्। निर्मथ्य विपुलंरत्नं प्रापुश्छात्राः सहस्रशः॥
दुर्व्याख्यां काव्यमीमांसां पूर्वैरविवृतामपि। विवृणोमि यथाबुद्धि बालव्युत्पत्तिहेतवे॥

आरिप्सितस्य ग्रन्थस्य निरन्तरायपरिसमाप्तये सदाचारपरम्पराप्राप्तं श्रुत्वा श्रेयःसाधनं मङ्गलं शिष्यशिक्षायै ग्रन्थवटकीकुर्वन् श्रोतृप्रवृत्त्यर्थं विषयसम्बन्धप्रयोजनान्याह—॥अथेति॥। अथशब्दोऽत्रारम्भार्थः। तथाच काव्यस्य मीमांसा·

---

शृङ्ग चार अरु पाद तीन हैं, सात हाथ जिसके दो शिर हैं।
त्रिधाबद्ध जो वर्षणकारी है, प्रसिद्ध जग में ध्वनिकारी॥

आरब्ध ग्रन्थ की निर्विघ्नतापूर्वक समाप्ति के लिए सज्जनाचरित मंगल को—जो कि श्रवणमात्र से श्रेयःसम्पादक है—ग्रन्थ में निविष्ट करते हुए पाठकों की प्रवृत्ति के लिए ग्रन्थ का विषय, सम्बन्ध और प्रयोजन ग्रन्थकार लिखते हैं। अथेति। अब यहाँ से काव्य की मीमांसा करेंगे। अर्थात् यह काव्य सबसे पहले संसार में कहां से आया, कैसे बनता है और कौन २ इसके बनाने के उपाय हैं, इत्यादि विषयों का विचार करेंगे।

ण्ठादिभ्यश्चतुःषष्टये शिष्येभ्यः। सोऽपि भगवान्स्वयम्भूरिच्छाजन्मभ्यः स्वान्तेवासिभ्यः। तेषु सारस्वतेयो वृन्दीयसामपि वन्द्यःकाव्यपुरुष आसीत्।

---

आरभ्यत इति पर्यवसितम्। मङ्गलं तु नास्याभिधेयोऽर्थः, किन्तु श्रुत्याऽस्य मङ्गलप्रयोजकता। तदुक्तं शारीरकभाष्ये—'अर्थान्तरप्रयुक्तोऽथशब्दः श्रुत्या मङ्गलप्रयोजनो भवती'ति। 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभावि'त्यनेनापि तस्य श्रवणेनैव मङ्गलसाधनत्वमुक्तं भवति। अतः शब्दो हेतुवचनः। एवं हि शब्दसाधुत्व-पदार्थज्ञानादिकारिणीभूतपाणिनीयकणभुजीयादि-मतपर्यालोचनानन्तरं यतः काव्यं निर्मातुमालोचयितुं च जिज्ञासोदयः, अतो हेतोः काव्यं लोकोत्तरं कविकर्म। यदुक्तम्—

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता। तदनुप्राणनाज्जीवद्वर्णनानिपुणः कविः॥

तस्य कर्म स्मृतं काव्यम्। इति।

मीमांसिष्यामहे कथमिदं काव्यामृतमादौ लोके प्रसूतं, काव्यस्य कारणानि, कीदृशोऽन्तेवासिनोऽस्य ग्रहणे योग्याः, के चास्य रचनोपायाः, कियन्तोऽस्य भेदाः, किमात्मकं चेदमित्यादि सर्वं विचदयामहे। एवं मीमांस्यं काव्यं विषयः, तज्ज्ञानं प्रयोजनम्, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः।

अस्य शास्त्रस्य परम्परां सूचयन्नागमविशुद्ध्यर्थं गुरुपूर्वक्रमं दर्शयति *यथेति*। यथा यादृशं काव्यं, श्रीः हलाहलधारणजन्या शोभा कण्ठे यस्यासौ महेश्वरः, परमेष्ठी ब्रह्मा, विगता कुण्ठा प्रतिबन्धिका शक्तिर्यस्यासौ विष्णुः, अनयोरितरेतरयोगद्वन्द्वः। तौ आदी येषां तेभ्यः तथाभूतेभ्यः। आदिशब्दात् रुद्रगुहबृहस्पतिभार्गवादीनां ग्रहणम्। चतुःषष्टये 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो'रिति कोषादेकवचनम्। शिष्येभ्य उपदिदेश अनुशशास, तादृशं काव्यं, मीमांसिष्यामह इति पूर्वेणानुषङ्गः। *सोऽपीति*। सोऽपि श्रीकण्ठाद् गृहीतोपदेशोऽपि भगवान् षडैश्वर्यसम्पन्नः, तदुक्तम्—ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञान-

---

इस तरह सिद्ध हुआ कि काव्य इसका विषय है, ग्रन्थ का और विषय का परस्पर में प्रतिपाद्य-प्रतिपादकभाव सम्बन्ध है ( ग्रन्थ प्रतिपादक है, विषय प्रतिपाद्य है ), उसका जानना प्रयोजन है, इसके जानने की इच्छा रखने वाला अधिकारी है।

इस शास्त्र की अविच्छिन्न-परम्परा सूचित करते हुए आगम-शुद्धि के लिए पूर्व गुरुओं का क्रम दिखाते हैं—यथेति। शिवजीने ब्रह्मा, विष्णु प्रभृति चौसठ शिष्यों को इस शास्त्र का उपदेश दिया। इसके बाद ब्रह्माजी ने अपने अपने मानस पुत्र मरीच्यादियों को पढ़ाया। उन ब्रह्माजी के शिष्यों में सरस्वती का पुत्र देववन्दनीय काव्य-पुरुष भी था। सर्वसिद्धान्तवेत्ता एवं दिव्यज्ञान से भविष्य-द्रष्टा उस काव्य पुरुष को त्रैलोक्य में प्रजाओं

तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्त्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्त्तनार्थं प्रायुङ्क्त ।

---

वैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति । स्वयम्भूर्ब्रह्मा इच्छांतो जन्म येषां तेभ्यो मनसा निर्मितेभ्यो मरीच्यादिभ्यः । स्वे आत्मीया अन्तेवासिन श्छात्रास्तेभ्यः, उपदिदेशेति शेषः । ॐतेष्विति॰ । तेषु शिष्येषु सारस्वतेयः सरस्वतीपुत्रः । स्त्रीभ्यो ढक् । वृन्दीयसां देवानाम् । वृन्दारकशब्दादीयसुनि 'प्रियस्थिरोरुबहुले'ति वृन्दादेशः । वन्द्यः पूज्यः । काव्यप्रवर्त्तकः पुरुषः काव्यपुरुषः । अयमेवादौ लोके काव्यं प्रवर्त्तितवान् । तथा च वक्ष्यति ग्रन्थकृत् अनुपदमेव—तमित्यादिना । 'त्वदुपज्ञमथातश्छन्दस्वद्वचः प्रवर्त्स्यति' इत्यादिना सारस्वतेयुक्तत्वाच्च । अथवा काव्यरूपः पुरुषः काव्यपुरुषः । काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुज्यत इति ग्रन्थकारोक्तेः । आसीत् अभवत् । ॐतं चेति॰ । सर्वान् समयान् सिद्धान्तान् 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । वेत्तीति तम् । अखिलसिद्धान्तज्ञातारम् । दिव्येन चक्षुषा दिव्यदृष्ट्या भविष्यदर्थस्य दर्शिनं दर्शकं तं पूर्वोक्तम् । भूर्भुवःस्वस्त्रयो लोकाः । तत्त्रितयवर्त्तिनीषु प्रजासु आसां मध्य इत्यर्थः । हितकाम्यया आसामेवोपकारेच्छया । काव्यस्योपयोगिनी विद्या काव्यविद्या काव्यनिर्माणपर्यालोचनोपदेशिकेति यावत् । तस्याः

---

के हित के लिए काव्यविद्या फैलाने को नियुक्त किया । उसने अट्ठारह अधिकरणों वाली काव्यविद्या का शिष्यों को उपदेश दिया । उन शिष्योंमें इन्द्रने (१) कविरहस्य, उक्तिगर्भ ने

---

(१) हमने जहां तक अन्वेषण किया है वहां तक हमको यही मालूम हुआ है कि काव्यमीमांसा संगृहीत ग्रन्थ है । जिसका हवाला स्थान २ पर देने की कोशिश हम करेंगे । और विवृति लिखते समय जो बातें हम नहीं दिखा सकें वे सब बातें भी दिखायेंगे ।

राजशेखर ने यह जो लिखा है कि—शिव ने ब्रह्मा प्रभृति को काव्य का उपदेश दिया और ब्रह्मा ने अपने शिष्यों को काव्य पढ़ाया, उनमें एक काव्य-पुरुष भी था, जिसको काव्यविद्या फैलाने की आज्ञा दी । उसने इन्द्रादि अट्ठारह शिष्यों को पृथक् २ काव्यविद्या के अट्ठारह अधिकरण पढ़ाये— वे सब लेख कोरी कल्पनामात्र है, इसका मूल कुछ भी नहीं है । वास्तविक तत्त्व यह है कि रुद्रट ने काव्यालंकार ग्रन्थ लिखा है । उस ग्रन्थ के प्रथम अध्याय में कवियों के लिए कुछ एवं जानने योग्य बातें लिखी गयी हैं ( जो महाशय देखना चाहें वे रुद्रट काव्यालंकार को देख लें ) । उसी के अनुसार राजशेखर ने कविरहस्य की कल्पना की है और उसी के दूसरे अध्याय में रीतियों के बतलाने के बाद वक्रोक्ति, अनुप्रास, यमक, श्लेष और चित्र ये पांच शब्दालंकार बतलाए

सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच। तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्, औक्तिकमुक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्रचेता, यमकं यमः, चित्रं चित्राङ्गदः, शब्दश्लेषं

---

प्रवर्त्तनार्थं तां प्रसारयितुमित्यर्थः। प्रजापतिर्ब्रह्मा प्रायुङ्क्त न्ययुङ्क्त। *सेति*। स प्रजापतिनियुक्तः अष्टादश अधिकरणानाम्। अधिक्रियन्ते विषयीक्रियन्तेऽवान्तरप्रमेयरूपाणि प्रकरणानि येषु तेषां समाहारस्तामष्टादशाधिकरणीम्, अष्टादशाधिकरणेषु विभक्तावयवां काव्यविद्यां 'दिव्येभ्यः स्वर्गसमुद्भूतेभ्यः। ये कवित्वकामाः काव्यविद्योपविद्याग्रहणाय गुरुकुलमुपासते ते तद्विद्यायां स्नातकास्तेभ्यः। सप्रपञ्चं सविस्तरं प्रोवाच उपदिदेश।

तेभ्यः प्रोवाचेति सामान्याकारेणोक्तम्, कस्मै किं प्रोक्तं तत्र केन किमभ्यस्तमिति जिज्ञासायामाह—※तत्रेति※। तत्र तेषां काव्यविद्यास्नातकानां मध्ये सहस्राक्ष इन्द्रः कवीनां रहस्यं मार्मिकं वस्तु यस्मिन्नस्तीति। अर्शआदित्वादच्। तन्नामाधिकरणं समाम्नासीत् अभ्यास्थत। समाम्नासीदित्यस्य सर्वत्रोत्तरत्रानुषङ्गः। तत्र कविभिः कथं व्यवहर्त्तव्यम् कथं कीदृशे च काव्यनिर्माणादौ प्रयतनीयम्, इत्याद्युपदेशकं यत् शास्त्रसंग्रह इत्यारभ्य भुवनकोश इत्येतावत्पर्यन्तं ग्रन्थकृन्निर्दिष्टं प्रथमाधिकरणं कविरहस्यं तादृशं किमपि पपाठेत्यर्थः। उक्तिः उच्चारणक्रियालक्षणं 'पठन्ति लभटं लाटाः' इत्यादि पाठप्रतिष्ठारूपमभिधानं सा व्याख्यायतेऽस्मिन्स्तदधिकरणमौक्तिकम्, उक्तिगर्भस्तन्नामा शिष्यः। रीयते क्षरति वाङ्मधुधाराऽनया वा रिणन्ति गच्छन्ति गुणा अनयेति रीतिर्मार्गः। तस्या निर्णयः। त्रिविधा षड्विधा वेत्यादिरूपः यत्रास्तीति। अर्शआद्यच्। तन्नामाधिकरणं सुवर्णनाभः। रसाद्यनुगतत्वेन वर्णानां प्रकृष्ट आसः अनुप्रासः। स व्याख्यायत इति पूर्ववत्। आनुप्रासिकमधिकरणं, प्रचेता वरुणः। 'प्रचेता वरुणः पाशी'त्यमरः। यमं युग्मभावं कायतीति यमकं तदस्मिन्नस्तीति। अर्शआद्यच्। यमकाधिकरणं यमो यमराजः। मुद्रितपुस्तकेषु तु अत्र महानपपाठः। अन्ये जीर्णपुस्तकाक्षरेषु सम्भ्रान्तत्वाद् विभिन्नयोः यमप्रचेतसोः प्रचेतायम-

---

और (?) (वक्रो) क्तिक, प्रचेता ने आनुप्रासिक, यम ने यमक, सुवर्णनाभ ने रीतिनिर्णय,

---

हैं। बाद में अध्याय-समाप्तिपर्यन्त वक्रोक्ति और अनुप्रास के भेद-प्रभेद बतलाए हैं। तीसरे अध्याय में अन्त तक केवल यमक के भेद-प्रभेद बतलाए हैं और चौथे अध्याय में केवल श्लेष कहा है तथा पांचवें अध्याय में सिर्फ चित्रालङ्कार का वर्णन किया है। वक्रोक्ति दो तरह की वहाँ कही हैं—एक श्लेषवक्रोक्ति दूसरी काकुवक्रोक्ति और दोनों के लक्षण रुद्रट ने ऐसे लिखे हैं—

शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः, अर्थश्ले-

---

इत्येकीकृत्य, तथा यमकानि चित्रं चित्रांगदः इति मूर्द्रणा विहिता। अधिकरण-
नियतसंख्यासमसंख्याकत्वेन शिष्याणां परिगणनायां तेषां सप्तदशत्वमेव भवति।
अतः प्रचेता यम इति विभज्य पाठ्यम्। यमकानि, इत्यत्र यमकमित्येकवचनान्तेन
भवितव्यम्, अधिकरणस्यैकत्वात्। तत्रापि 'यमकं यम' इत्येव सुपाठः। यतोऽत्र
पूर्वं द्वितीयान्तस्य पश्चात् प्रथमान्तपदस्य पाठो विहितः, अतस्तथैव पाठो ज्या-
यान्, अन्यथा भग्नप्रक्रमाख्यो दोषः प्रसज्ज्येत। यो हि आत्मानं कविराजं मनुते
तस्य तु दोषकणिकाऽपि निकारास्पदं किमुत साक्षाद् दोषः। वर्णस्थानस्वराकारगतिब-
न्धानुकूलो नियमाश्चित्रमेतन्नामालङ्कारः। 'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते' इति
दर्पणोक्तेः। तदस्मिन्नस्तीति पूर्ववत्। तदधिकरणं चित्राङ्गदः। शब्दस्य श्लेषः संभेदः।
सोऽस्मिन्नस्तीति तदधिकरणं शेषः शेषनागः। वस्तु भावः। भावश्च क्रिया। एवं
वस्तु भावं क्रियामिति यावत् वर्णनीयत्वेन अधिकृत्य कृतमधिकरणं वास्तवं स्वभा-
वोक्तिसम्बन्ध्यधिकरणं पुलस्त्यः ब्रह्ममानसपुत्रातिरिक्तः कश्चनान्यः शिष्यः। तस्य तु
काव्यपुरुषस्य सतीर्थ्यत्वात्। औ (१) पम्यमुपमैव (चतुर्वर्णादित्वात् स्वार्थे ष्यञ्)

---

चिद्रांगद ने चित्र, शेष ने शब्दश्लेष, पुलस्त्य ने वास्तव, औपकायन ने औपम्य, पराशर
ने अतिशय, उतथ्य ने अर्थश्लेष, कुबेर ने उभयालंकारिक, कामदेव ने वैनोदिक, भरत ने

---

वक्त्रा तदन्ययोक्तं व्याचष्टे चान्यथा तदुत्तरदः। वचनं यत्पदभङ्गैर्ज्ञेया सा श्लेषवक्रोक्तिः॥
विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशेषतो भवति। अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः॥
अनुप्रास वगैरह के लक्षण ये लिखे हैं—
एकद्वित्रान्तरितं व्यञ्जनमविवक्षितस्वरं बहुशः। आवर्त्यते निरन्तरमथवा यदसावनुप्रासः॥
तुल्यश्रुतिक्रमाणामन्यार्थानां मिथस्तु वर्णानाम्। पुनरावृत्तिर्यमकं प्रायश्छन्दांसि विषयोऽस्य॥
वक्तुं समर्थमर्थं सुश्लिष्टाक्लिष्टविविधवदसन्धि। युगपदनेकं वाक्यं यत्र विधीयते स श्लेषः॥

भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि।
सांकानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्॥

इस तरह पाँच शब्दालंकार बतला कर सातवें अध्याय में चार अर्थालंकार बतलाए हैं। जैसे—
अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः। एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः॥
अर्थात् वास्तव, औपम्य अतिशय और श्लेष ये चार अर्थके अलंकार हैं और जितने
भी अलंकार हैं, वे सब इन्हीं के अवान्तर-विशेष हैं, जिसमें वास्तव अलंकार का लक्षण
और उसके २३ भेद इस तरह बतलाए हैं—

(१) 'औपम्यं हि नाम अन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनम्' इति चरके।

षमुत्तथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचुमारः, इति । ततस्ते पृथक् पृथक स्वशास्त्राणि

---

तदस्मिन्नस्तीति तदधिकरणम् , औपकायनः । अतिशयोऽस्मिन्नस्तीति सोऽतिशयः, अत्यन्तातिशयोक्तिर्नामकालंकारः, तन्निरूपकाधिकरणं पराशरो व्यासपिता । अर्थस्य श्लेषोऽस्मिन्नस्तीति तदुतथ्यो बृहस्पतेर्ज्येष्ठभ्राता । उभयालङ्कारिकं शब्दार्थोभयनिष्ठोऽलङ्कारो व्याख्यायतेऽस्मिंस्तत्कुबेरः । विनोदो यासु ता वैनोदिकाः चतुःषष्टिकलायास्ता अस्मिन्नधिकरणे सन्ति तदधिकरणं चतुःषष्टिकलानाञ्चतुःशतोपकलानाञ्चोपदेशकमिति यावत् । कामदेवः रूपकाणां नाटकप्रकरणादीनां निरूपणं प्रयोगः अभिनय इति यावत् रूपकनिरूपणम् । तदधिकृत्य कृतमधिकरणं भरतो नाट्यशास्त्रप्रणेता । रसस्याधिकारः प्रकरणम् । तद् व्याख्यायत इति पूर्ववत् । एवं रसाधिकारिकमधिकरणं नन्दिकेश्वरः । दोषस्य निरूपकमधिकरणं दोषाधिकरणं धिषणः । गुणानामुपादानं ग्राह्यत्वं, गुणोपादानम् तद् व्याख्यायत इति पूर्ववत् उत्तरपदवृद्धिश्च । उपमन्युः उपनिषद्-रहस्यम् । सा व्याख्यायतेऽस्मिंस्तदधिकरणमौपनिषदिकम् । कामस्य शास्त्र द्विविधम् । तन्त्रावापभेदाभ्याम् । तत्र तन्ध्यते जन्यते रतिर्येन तत्तन्त्रमालिङ्गनादि । समन्तादावाप्यन्ते स्त्रियः पुरुषाश्च येन स आवापः संगमोपायः । ते यैरधिकरणैरुपदिश्येते तान्यपि ताभ्यां व्यपदिश्यन्ते । तदर्थत्वात् । एवं च सांप्रयोगिक-कन्यासंप्रयुक्तक-भार्याधिकारिक-पारदारिक-वैशिकाधिकरणानि तन्त्रावापाभ्यां व्यपदिश्यन्ते । आभ्यामसिद्धे योषिदभिमुखीकरण-

---

रूपकनिरूपणीय, नन्दिकेश्वर ने रसाधिकारिक, धिषण ने दोषाधिकरण, उपमन्यु ने गुणौपा-

---

वास्तवमिति तज्ज्ञेयं क्रियते वस्तुस्वरूपकथनं यत् । पुष्टार्थमविपरीतं निरुपममतिशयमश्लेषम् ॥

तस्य सहोक्तिसमुच्चयजातियथासंख्याभावपर्यायाः ।

विषयानुमानदीपकपरिकरपरिवृत्तिपरिसंख्याः ॥

हेतुः कारणमाला व्यतिरेकोऽन्योन्यमुत्तरं सारम् । सूक्ष्मं लेशोऽवसरो मीलितमेकावली भेदाः ॥

आठवें अध्याय में औपम्य का लक्षण और उसके २१ भेद कहे हैं, जैसे—

सम्यक्प्रतिपादयितुं स्वरूपतो वस्तु तत्समानमिति । वस्त्वन्तरमभिदध्याद्वक्ता यस्मिंस्तदौपम्यम् ॥

उपमोत्प्रेक्षारूपकमपह्नुतिः संशयः समासोक्तिः । मतमुत्तरमन्योक्तिः प्रतीपमर्थान्तरन्यासः ॥

उभयन्यासभ्रान्तिमदाक्षेपप्रत्यनीकदृष्टान्ताः । पूर्वसहोक्तिसमुच्चयसाम्यस्मरणानि तद्भेदाः ॥

फिर नवें अध्याय में अतिशय अलंकार का लक्षण और उसके १२ भेद कहे हैं। जैसे—

यत्रार्थधर्मनियमप्रसिद्धिबाधाद्विपर्ययं याति । कश्चित्क्वचिदतिलोकं सा स्यादित्यतिशयस्तस्य ॥

पूर्वविशेषोत्प्रेक्षाविभावनातद्गुणाधिकविरोधाः । विषमासंगतिपिहितव्याघाता हेतवो भेदाः

विरचयाञ्चक्रुः। इत्थङ्कारञ्च प्रकीर्णत्वात् सा किञ्चिदुच्चिच्छिदे। इतीयं

---

रूपकर्मणि औपनिषदिकं प्रयुज्यते। नायकयोः सुभगंकरणं, वशीकरणम्, वृष्या योगाः, यत्र येषां स्वभावतः अवस्थाया वा नष्टो रागः प्रयोगात् प्रत्यानीयते तन्नष्टरागप्रत्यायनप्रकरणम्, लिंगवृद्धिविषयः अन्तर्धानादिसम्पत्तये चित्रा योगा, इत्येवं रूपविषयविभागसंवलितमधिकरणम्। तत्कुचुमारः समाम्नासीत् अधिजगे। इतिः समाप्तौ।

अध्ययनफलमाह—तत इति। ततोऽध्ययनान्तरं ते सहस्राक्षादयः पृथक् पृथक् स्वाधीतविद्यां स्वेच्छाविषयीभूतविद्यां वाऽवलम्ब्य शास्त्राणि ग्रन्थान् विरचयांचक्रुः।

स्वस्य शास्त्रप्रणयनवृत्तिकारणमाह—इत्थमिति। एवं पार्थक्येन शास्त्रप्रणयनात् प्रकीर्णत्वाद् ग्रन्थानां विच्छिन्नत्वात्। प्रकीर्णं ग्रन्थविच्छेद इति जटाधरः सा काव्यविद्या किंचिदल्पमुच्चिच्छिदे उच्छिन्ना। क्वचिद् दृश्यमानत्वात् किञ्चिदिति निर्देशः। इति हेतोः प्रयोजकानि काव्यव्युत्पत्तौ कारणानि यानि अङ्गानि तदीयप्रधानफलजनकव्यापारजनकत्वे सति तदीयप्रधानफलाजनकत्वविशिष्टरूपाणि तद्वती

---

दानिक, कुचुमार ने औपनिषदिक नामक अधिकरण का अभ्यास किया। अभ्यास करने के बाद उन्होंने अपने २ पृथक् पृथक् शास्त्र बनये। इस तरह अलग २ शास्त्र बनाने से वह काव्यविद्या कुछ नष्टप्राय हो गई। इस वास्ते हमने काव्यौपयिक सम्पूर्ण पदार्थों को

---

दशवें अध्याय में श्लेष अलंकार और उसके दश भेद कहे हैं—

यत्रैकमनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन्। अर्थे कुरुते निश्चयमर्थश्लेषः स विज्ञेयः॥
अविशेषविरोधाधिकवक्रव्याजोक्त्यसंभवावयवा। तत्त्वविरोधाभासाविति भेदास्तस्य शुद्धस्य॥

इसके बाद ११ वें अध्याय में अर्थदोष और पहले छठे अध्याय में शब्ददोष कहे हैं। उद्भटाचार्य ने पुनरुक्तवदाभास वगैरह उभयालंकार कहे हैं। और भामह ने भी एक अध्याय में गुणों को उपादेय बतलाकर उनका वर्णन किया है। भरत ने नाट्यशास्त्र बनाया है, यह सभी जानते हैं। और कामसूत्रमें लिखा है कि दिव्यसहस्र वर्ष पर्यन्त महादेव और पार्वती ने रति की, उस समय नन्दिकेश्वर द्वारपाल था। द्वार पर रहते हुए उसने रतिशास्त्रीय सब विषय पढ़ा और तदनुसार ग्रन्थ बनाया और लिखा है कि कुचुमार ने औपनिषदिक अधिकरण बनाया है। उसी जगह कामसूत्र में ६४ कलाओं का स्वरूपतः वर्णन किया है। बस इन्हीं सब विषयों की आलोचना करके अनुप्रास मिलाते हुए 'रीतिनिर्णयं सुवर्णनाभः, औक्तिकमुक्तिगर्भः, आनुप्रासिकं प्रचेताः, यमकं यमः, शब्दश्लेषं शेषः, चित्रं चित्राङ्गदः' इत्यादि अधिकरणों की कल्पना की है। मूल वस्तु देखी जाय तो कुछ भी नहीं है। किंतु जो लिखा है वह सब युक्तिपूर्वक लिखा है। और नूतन प्रकार दिखलाने का साहस किया है।

प्रयोजकाङ्क्षवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशप्रकरणी प्रणीता। तस्या अयं प्रकरणाधिकरणसमुद्देशः। १ शास्त्रसंग्रहः, २ शास्त्रनिर्देशः, ३ काव्यपुरुषोत्पत्तिः, ४ शिष्यप्रतिभे, ५ व्युत्पत्ति-कवि पाकाः, ६ पदवाक्यविवेकः, ७ वाक्यविधयः, ८ काकुप्रकाराः, ९ पाठप्रतिष्ठा, १० काव्यार्थयोनयः, ११ अर्थानुशासनं, १२ कविचर्या, १३ राजचर्या, १४ शब्दार्थहरणोपायाः, १५ कविविशेषः, १६ कविसमयः, १७ देशकालविभागः, १८ भुवनकोशः, इति कविरहस्यं प्रथममधिकरणमित्यादि।

---

इयं काव्यमीमांसा सर्वमर्थं संक्षिप्य अखिलं काव्यौपयिकं पदार्थजातं सूक्ष्मया दिशा निर्दिश्य अल्पग्रन्थेन स्वल्पसन्दर्भेण अष्टादशप्रकरणानां प्रक्रियन्ते प्रकर्षेण व्युत्पाद्यन्ते अर्था येषु तेषां समाहारः। अष्टादशप्रकरणी प्रणीता प्रणितेति स्वीयकविरहस्याधिकरणस्य पूर्णता सूच्यते।

"तस्या इत्यादिना" स्वग्रन्थस्यार्थावयवानाचष्टे—तस्या अष्टादशप्रकरणेषु स्वस्वरूपमाविर्भावयन्त्याः काव्यमीमांसाया अयं सन्दर्भ्यमाणः प्रकरणैर्घटितस्य अधिकरणस्य। मध्यमपदलोपी समासः। समुद्देशः संक्षेपेण निर्देशः संक्षिप्तस्वरूपक्रमेयत्ताख्यानमित्यर्थः। क्रियते इति शेषः।

"शास्त्रसंग्रह इति"। इमानि अष्टादशप्रकरणार्थबोधकानि तत्संज्ञाकानि सूत्राणि। अत्र मुद्रितपुस्तके त्रुटितः अस्तव्यस्तश्च पाठः, तथा पञ्चदश सूत्राणि वर्तन्ते, अस्माभिस्तु अध्यायान्ते ग्रन्थकृन्निर्दिष्टं नाम अध्यायोक्तविषयञ्चाकलय्य यथैषां सूत्राणां विच्छेदो मा भवेत्तथा अष्टादशप्रकरणीयं प्रणीतेति प्रतिज्ञानुसारेण अष्टादश सूत्राणि सत्रुटिपूरणं यथाक्रमं निर्दिष्टानि सामान्यतो निगदव्याख्याताव्येतानि तत्तत्प्रकरणव्याख्यावसरे विशेषं व्याख्यास्यामः। इदन्तु अवधेयम्। अत्र कविरहस्ये अष्टादशाध्यायैः शास्त्रसंग्रह इत्यारभ्य देशकालविभाग इत्यन्तानि सप्तदश सूत्राण्येव ग्रंथकर्त्रा व्याख्यातानि केवलं भुवनकोश इति सूत्रं व्याख्यातुं पृथग्ग्रंथो विनिर्मितः, तदुक्तं तेनैव सप्तदशाध्यायान्ते।

इत्थं देशविभागो मुद्रामात्रेण सूचितः सुधियाम्।
यस्तु जिगीषत्यधिकं पश्यतु मद्भुवनकोशमसौ॥ इति।

इतिः स्वरूपे। कविरहस्यनामकं प्रथममधिकरणम्। इतिः समाप्तौ।

---

संक्षेप में निर्देश करके अल्प संदर्भ के द्वारा काव्य-व्युत्पत्ति में कारणीभूत इस विद्या की अष्टादश प्रकरणों में रचना की। जिसका नाम काव्यमीमांसा रखा है। उस काव्यमीमांसा के प्रकरणघटित अधिकरण का यह संक्षिप्त स्वरूप है। शास्त्रसंग्रह प्रभृति अठारह सूत्र जो कि एक २ प्रकरण के सूचक हैं इन्हीं का समुदायभूत कविरहस्य नामक पहला अधिकरण है।

इति सूत्राण्यथैतेषां व्याख्याभाष्यं भविष्यति ।
समासव्यासविन्यासः सैष शिष्यहिताय नः ॥
चित्रोदाहरणैर्गुर्वी ग्रन्थेन तु लघीयसी ।
इयं नः काव्यमीमांसा काव्यव्युत्पत्तिकारणम् ॥
इयं सा काव्यमीमांसा मीमांसा यत्र वाग्लवे ।

---

ग्रन्थमालस्य विशृङ्खलतानिरासपूर्वकं स्वरचनाशैलीमाह—ॐइतीतिॐ। इति एवमुक्तप्रकारेण सूत्राणि अर्थात् ग्रन्थस्य प्रकरणानि सूत्ररूपेण निर्दिष्टानि। अथ सूत्रानन्तरमेतेषां सूत्राणां व्याख्या भाष्यं च भविष्यति अस्माभिर्निर्मास्यत इति भावः। स एष नोऽस्माकम्। समासश्च व्यासश्चेति समासव्यासौ ताभ्यां विन्यासो विरचनं शिष्याणां छात्राणां हिताय बुद्धिवैशद्यरूपेष्टसाधनाय वर्तत इति शेषः। कथं समासव्यासाविरचत आह—ॐचित्रेतिॐ। चित्रैर्नानाभेदप्रभेदभिन्नैरुदाहरणैः प्रकृतार्थोपपादकदृष्टान्तैः गुर्वी महती अनेन व्यासो निर्दिष्टः। ग्रंथेन तु शास्त्रेण (ग्रथ्यते विरच्यते इति ग्रंथः शास्त्रम् कर्मणि घञ्) लघीयसी अल्पीयसी। तुर्भेदे ग्रंथोदाहरणयोर्भेदोऽस्तीति भावः। एवं समासोऽप्युक्तः प्रकरणान्तःपातिपदार्थक्रमनिश्चितस्वद्व्यामोहः समासफलम्। क्षीयमानप्रकृतिपदार्थस्फुटविचारो व्यासफलम्। इदमेव समासव्यासविन्यासतत्त्वम्।

ग्रंथस्य फलमाह—ॐइयमितिॐ। बुद्धिस्था नोऽस्माकं काव्यमीमांसा काव्यव्युत्पत्तौ काव्यस्य विशिष्टज्ञाने कारणं हेतुः। अधीतयाऽनया काव्यस्य विशिष्टज्ञानं भवतीति सारः।

एवं काव्यस्य फलमुक्त्वा सप्रतिज्ञं काव्यमीमांसापदं निर्वक्ति—ॐइयमितिॐ। इयं विरच्यमाना सा काव्यमीमांसा वर्तते इति शेषः। यत्र यस्यां वाचो वाण्या लवे खण्ड एकदेश इति यावत् अर्थात् महावाङ्मयस्यैकदेशे काव्ये मीमांसा पूज्यविचारः। किं नाम काव्यम्, उपदेष्टव्यं नोपदेष्टव्यं वा, काव्येषु वर्णनीयार्थाः कीदृशाः, तन्निर्मा-

---

इस तरह ये सूत्र बतला दिए। अब इनका यथावसर व्याख्या भाष्य होगा।

हमने जो यह सूत्र एवं व्याख्याओं के द्वारा संक्षिप्त और विस्तृत रचना की है वह शिष्यों के हित के लिए ही की है। जिसमें नाना प्रकार के उदाहरणों से यह पुस्तक बड़ी है, ग्रन्थरूप में अल्प है।

ग्रन्थ का फल बतलाते हैं। यह हमारी काव्यमीमांसा काव्य की व्युत्पत्ति में कारण है।

इस तरह ग्रन्थ का फल कहकर प्रतिज्ञापूर्वक काव्यमीमांसा पद का निर्वचन करते हैं।

वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ॥
यायावरीयः सङ्क्षिप्य मुनीनां मतविस्तरम् ।
व्याकरोत्काव्यमीमांसां कविभ्यो राजशेखरः ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे प्रथमोऽध्यायः शास्त्रसङ्ग्रहः ।



---

तारश्च कीदृशाः, इत्यादिर्विचारो ग्रंथकर्त्रा करिष्यते। प्रतिज्ञामाह—※य इति※। यस्तु (तु समुच्चये) यः कोपि इमां मया निर्माश्यमानां काव्यमीमांसां न विजानाति स काव्यं न जानाति कविकाव्ययोः सूक्ष्माणां विधानां ज्ञानमेतदध्ययनेनैव भावि नान्यथा। तस्मात् काव्यबुभुत्सुभिरियमवश्यमादर्तव्येति भावः। अत्र मुद्रितपुस्तके मीमांसा यत्र वाग्लव इत्यत्र वाग्लव इति प्रथमान्तः पाठोऽपपाठः। सप्तम्यन्तः पाठः साधीयान्। तत्सिसाधयिषया मीमांस्य इति कल्पने यमकभङ्गापत्तिर्दुर्वारा। तस्मात्स एव साधुः।

स्वकीर्त्यनुवृत्तये स्वकुलनामनी सूचयन् स्वकपोलकल्पनाव्युदासार्थं पूर्वाचार्यसम्मतत्वमेतद्ग्रन्थस्य व्यवस्थापयति—※यायावरीय इति※। यायावरीयो यायावरकुलोत्पन्नो राजशेखर एतन्नामा कविः मुनीनां मतस्य शास्त्रस्य विस्तरं संक्षिप्य समासीकृत्य काव्यमीमांसां काव्यविषयकपूज्यविचारं कविभ्यः काव्यनिर्मातृपर्यालोचयितृभ्यो व्याकरोत् व्याख्यत्। यायावरस्य गोत्रप्रवर्त्तकस्य कस्यचिन्महापुरुषस्यापत्यं यायावरीयः। एषा कुलक्रमादागता संज्ञा। राजशेखर इति सांस्कारिकी संज्ञा। इतिः अध्यायसमाप्तिसूचकः। अध्यायः प्रमेयविरतिस्थानम्। 'प्रमेयविरतिस्थानमध्यायश्च प्रपाठक' इति वैजयन्ती।

इति प्रथमोऽध्यायः।



---

यह वह काव्यमीमांसा है, जिसमें काव्यविषयक विवेचना की गई है। जो इसको नहीं जानता है वह काव्य को नहीं जानता।

कीर्ति फैलाने के लिये अपना और अपने कुल का नाम सूचित करते हुए—यह मेरी कोरी मनगढन्त कल्पना नहीं है किन्तु पूर्वाचार्यों के मत के अनुकूल है—इस बात को बतलाते हैं—यायावर कुल में पैदा हुये राजशेखर ने मुनियों के नानामतों को संक्षिप्त करके कवियों के लिये यह काव्यमीमांसा ग्रन्थ बनाया है।

'बालक्रीडा' में शास्त्रसंग्रह नामक प्रथम अध्याय समाप्त।



## अथ द्वितीयोऽध्यायः

# शास्त्रनिर्देशः २

इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च। शास्त्रपूर्वकत्वात् काव्यानां

---

शारदां सारदां देवीं वन्दे वन्द्यपदां सदा।
विशदा कौमुदी यस्याः सादयत्यनिशं तमः॥

अथ समुद्देशनिर्देशक्रमेण सूत्राणि व्याचिख्यासुः'न स शब्दो न तद्वाक्यं न सा विद्या न सा कला। जायते यन्न काव्याङ्गमहो भारो महान् कवेः॥' इत्यभिप्रायवान् अवसरप्राप्तं सूत्रमासूत्रयति—*शास्त्रेति*। अनेन अनन्तरवक्तव्यत्वरूपावसरसङ्गतिरपि दर्शिता। शास्त्राणां निर्देशः शास्त्रनिर्देशः, क्रियत इति शेषः। तत्तत्प्रसङ्गेन काव्येषु पृथक् पृथक् शास्त्रीयविषयस्य वर्णितत्वेन तेषां काव्यानां ज्ञानं दुर्लभम्। यथा—'साध्ये निश्चितमन्वयेन घटितमि'त्यत्र न्यायसिद्धान्तस्य,'फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनी'त्यत्र सांख्यस्य', स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चयेदि'त्यायुर्वेदस्य,'मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैरि'ति वेदान्तस्य ज्ञानमन्तरा एषां पद्यानां ज्ञानं दुर्लभमेव। अतस्तदर्थं शास्त्राणां नामतो निर्देशोऽस्माभिः क्रियते। प्रमेयभागस्तु तत्तद्गुरुभ्यो ज्ञेयः। इति भावः।

तत्किं शास्त्रमित्याकाङ्क्षायां वाङ्मयमुखेन तद्दर्शयति—॥इह हीति॥। इह लोके वाङ्मयम् (स्वरूपार्थे मयट्) वाणीस्वरूपम, उभयथा द्विविधं-शास्त्रं काव्यञ्चेति' शास्त्रकाव्यभेदादित्यर्थः। केचित्तु शब्दस्य प्राधान्ये शास्त्रम्, अर्थस्य तत्त्व आख्यानम्, द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यम्, इति त्रिविधं वाङ्मयमाचक्षते। तदुक्तम्—

शब्दप्रधानमाश्रित्य यत्र शास्त्रं पृथग्विदुः।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्॥ इति।

केचिदस्य चातुर्विध्यमाचक्षते। तथा चोक्तम्—

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः।
चतुःप्रकारः प्रसरः सतां सारस्वतो मतः॥ इति।

---

अब समुद्देश में बतलाए हुए क्रम के अनुसार सूत्रों का व्याख्यान करने की इच्छा से अवसरप्राप्त द्वितीय सूत्र को कहते हैं—शास्त्रनिर्देशः। इस अध्याय में शास्त्रों का निर्देश करेंगे।

इसका आशय यह है कि काव्यों में स्थान स्थान पर शास्त्रीय विषयों का वर्णन किया

पूर्वं शास्त्रेष्वभिनिविशेत। नह्यप्रवर्त्तितप्रदीपास्तमसि तत्त्वार्थसार्थमध्यक्ष-यन्ति। तच्च द्विधा अपौरुषेयं पौरुषेयं च। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मणे। विवृतक्रियातन्त्रा मन्त्राः। मन्त्राणां स्तुतिनिन्दाऽव्याख्यान-

---

शास्त्रेति। काव्यानां, शास्त्रं पूर्वं प्रथमं येषां तेषां भावस्तत्त्वं तस्मात्, विनाप्राथ-म्यात पूर्वं शास्त्रेषु न्यायादिषु अभिनिविशेत अध्यवस्येत्। पूर्वोक्तमर्थं दृष्टान्तेन समर्थयति-*नहीति*। अप्रवर्तितः प्रदीपो यैस्ते अप्रज्वालितप्रकाशसाधनः पुरुष-स्तमसि अन्धकारे तत्त्वं वस्तुनस्तादात्म्यम्, अर्थो वस्तु, तयोः सार्थं समूहं नाध्यक्ष-यन्ति न प्रत्यक्षयन्ति। अन्धकारे पदार्थज्ञानाय प्रदीपानामिव काव्यार्थज्ञानाय शा-स्त्राणामावश्यकता इति भावः। शास्त्रं विभजते-*तच्चेति*। तच्छास्त्रमपौरुषेयमेकम्, पौरुषेयमनेकमिति द्विधा। अपौरुषेयं कर्तृत्वेन पुरुषसम्बन्धरहितम्, तथात्वादेवास्य अदुष्टत्वमनभिशङ्कनीयत्वञ्च। पौरुषेयं कर्तृत्वेन पुरुषसम्बन्धसहितम्। तथात्वा-देवास्य दुष्टत्वम्, पुरुषाणां रागादिभिरविद्यया चोपप्लुतत्वात्। 'किमिदं सत्यं मिथ्या वेति' अभिशङ्कनीयत्वं च। तथा चाहुः—

दोषाः सन्ति न सन्तीति पौरुषेयस्य युज्यते।
वेदे कर्तुरभावात्तु दोषशङ्कैव नास्ति नः॥ इति।

अपौरुषेयस्य भेदोपभेदानुपवर्णयति-*अपौरुषेयमिति*। अपौरुषेयम् पुरुष निर्मितं यन्न भवतीति तत् श्रुतिर्वेदः। सा च 'मीनशरीरावच्छेदेन भगवद्वाक्यरूपा' इति नैयायिकाः, 'धर्मब्रह्मप्रतिपादकापौरुषेयरूपा' इति वेदान्तिनः, 'ब्रह्ममुख-निर्गतधर्मसंज्ञापकशास्त्रमि'ति पौराणिका वदन्ति। सा च। चोऽप्यर्थकः। श्रुतिरपि

---

गया है, इसलिए जब तक उन शास्त्रों के पदार्थ को नहीं जान लिया जायगा तब तक उन काव्यों का जानना कठिन होगा अतः शास्त्रों को बतला देना आवश्यक होगा।

वाङ्मय के दो भेद हैं। एक (१)शास्त्र दूसरा काव्य। शास्त्रीय नियमों के अनुसार काव्य चलते हैं इसलिए पहले शास्त्रों में परिश्रम करना चाहिये क्योंकि अँधेरे में रक्खी हुई वस्तु तब तक नहीं मिल सकती जब तक किसी तरह के प्रकाश की सहायता न की जायगी।

वह शास्त्र दो तरह का है। एक अपौरुषेय दूसरा पौरुषेय। अपौरुषेय वह होता है जो कि किसी पुरुष का बनाया हुआ नहीं हो। ऐसा शास्त्र वेद है। वह वेद मन्त्र ब्राह्मण स्वरूप है अर्थात् मन्त्र और ब्राह्मण का नाम वेद है। जिनसे यागादि क्रियायें विस्तार से

---

(१) प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

विनियोगादिग्रन्थो ब्राह्मणम् । ऋग्यजुः सामवेदास्त्रयी । अथर्वं तुरीयम् । तत्रार्थव्यवस्थितपादा ऋचः । ताः सगीतयः सामानि । अच्छन्दांस्य-

मन्त्रश्च ब्राह्मणं चेति । विवृता विस्तृताः क्रिया यागादयस्तन्त्राणि वेदशाखाविशेषाश्च यैस्ते मननान्मन्त्राः । यत्राभियुक्तानां विषयतासम्बन्धेन मन्त्रपदवाच्यत्वप्रकारिकोपस्थितिः स मन्त्रः । मन्त्रत्वमखण्डोपाधिर्वेदत्ववत्, इति तच्चोदकेषु मन्त्राख्येति मीमांसासूत्रानुसारि लक्षणम् । मन्त्राणां स्तुतेः प्रशंसायाः निन्दायाः, व्याख्यानस्य निर्वचनस्य, विनियोगस्य विधेः, आदिशब्दात् हेतु संशय-परक्रिया, पुराकल्पानां ग्रहणम् । तथा चैतेषां बोधको ग्रन्थो ब्राह्मणम् ।

वस्तुतस्तु ब्राह्मणस्य लक्षणं निर्देष्टुमशक्यम् । स्तुत्यादीनां मन्त्रेष्वपि दृष्टतया अव्याप्त्यतिव्याप्त्योर्निराकरणीयत्वात् । तद्यथा–'वायुर्वै क्षेपिष्ठा देवता' इति स्तुतिः, 'अमेध्या वै माषा' इति निन्दा, 'यदध्यात्तद्दध्नो दधित्वमि'ति व्याख्यानम् (निर्वचनम्) 'यजमानसम्मितौदुम्बरी भवती'ति विनियोगः । इत्यादयो यथा ब्राह्मणे तथा 'अग्निर्मूर्धादिव' इति स्तुतिः, 'मोघमन्नं विन्दते अप्रचेता' इति निन्दा, 'उदानिषु-महीरिति तस्मादुदकमुच्यते' इति व्याख्यानम् ( निर्वचनम् ), 'वसन्ताय कपिञ्जलानालभेत' इति विनियोग इत्यादयो मन्त्रेष्वपि तस्मात् 'शेषे ब्राह्मणशब्दः' इति मीमांसासूत्रानुसारि मन्त्रातिरिक्तवेद एव ब्राह्मणम् । ऋक् च यजुश्च साम चेति ऋग्यजुःसामानि तान्येव वेदास्तथा । त्रयी गद्यपद्यगीत्यात्मकरचनाशाली वेदस्त्रयीशब्देन व्यवह्रियत इति भावः । तत्र गद्यात्मको यजुर्वेदः । पद्यात्मक ऋगथर्वणी । गीतिरूप साम । तथा चोक्तम्—

विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते । ऋग्यजुः सामरूपेण मन्त्रो वेदचतुष्टये ॥ इति ।

॥अथेति॥ । अथ लोकमङ्गलाय अर्थ्यते प्रस्तूयते यत् (अथपूर्वस्य अर्थ्यतेः कर्मणि अनिप् शकन्ध्वादित्वात्पररूपम् ) तत् भेषज्यराजनीत्यादिप्रतिपादको वेदः अथर्व-तुरीयं चतुर्थम् । नपुंसकमथर्वपदाभिप्रायेण ।

ऋगादीनां स्वरूपं निर्दिशति—॥तत्रेति॥ । तत्र त्रय्या मध्ये अर्थेन अर्थवशेन अर्थात् एकान्वयित्वेन व्यवस्थिताः शास्त्रनिरूपितविधानमापन्नाः पादा अनुष्टुबादयो

करा सके वे मंत्र हैं । उन मन्त्रों की स्तुति, निन्दा, विनियोग आदि का बोधक ग्रन्थ ब्राह्मण होता है । ऋक्, यजु, साम ये तीन वेद हैं और चौथा अथर्ववेद । जिसमें अर्थ के अनुकूल पादों की व्यवस्था हो वह ऋग्वेद है । अगर ये ही ऋचाएँ गीतमयी हों तो साम कहलाती हैं । अर्थात् जिन ऋचाओं के स्वरूप गानमय हों वह साम है जो छन्दोबद्ध नहीं हो और गाया भी नहीं जा सके उसको यजुर्वेद कहते हैं । जिसमें औषधि और राजनीति बतलाई गई हो वह अथर्ववेद है । इस तरह ये चार वेद हुए और इन चारों के

गीतानि यजूंषि। ऋचो यजूंषि सामानि चाथर्वाणित इमे चत्वारो वेदाः। इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः। 'वेदोपवेदात्मा सार्व-

---

यासु ता ऋच्यन्ते प्रस्तूयन्ते देवा आभिरिति ऋचः। यदुक्तम्-ऋक्प्रातिशाख्यवृत्तौ' 'यः कश्चित्पादवान्मन्त्रो युक्तश्चाक्षरसंख्यया। स्वरयुक्तोऽवसाने च तामृचं परिजानते॥' इति। ता ऋचः सगीतयः गीतिभिः सहिताः स्यति छिनत्ति दुःखं गेयत्वात् वा स्यति दुःखयति दुरध्येयत्वात, वा स्यति पापं ब्रह्माननिर्गतत्वात् साम। 'षोऽन्तकर्मणि' इत्यस्मात 'सातिभ्यां मनिन् मनिनौ'—इति मनिन्। अच्छन्दांसि गद्यमयत्वात अगीतानि गीतिरहितानि इज्यत एभिस्तानि यजूंषि। तदुक्तं तिथ्यादितत्वे— 'यन्मन्त्रजातं प्रश्लिष्य पठितं गानादिविच्छेदरहितं तद्यजुरि'ति। परिगणयन्दर्शयति· *ऋच इति*। ऋचो यजूंषि सामानि चाथर्वाणि त इमे पूर्वोक्ताश्चत्वारो वेदाः। वेदशब्दस्य बहुप्रकारा व्युत्पत्तयो वर्त्तन्ते तासु काश्चित् प्रदर्श्यन्ते, विद्यन्ते ज्ञायन्ते धर्मादिपुरुषार्थचतुष्टयोपाया एभिरिति वा विद्यन्ते ज्ञायन्ते लभ्यन्ते धर्मादिपुरुषार्था एभिरिति वेदाः। अस्मिन् करणघञन्तपक्ष उञ्छादीनां चेत्यन्तोदात्तत्वम्। इष्टानिष्ट-प्राप्तिपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति कर्तृघञन्तपक्षे वृषा-दीनां चेत्याद्युदात्तत्वं बोध्यम्।

इत्थं वेदान् प्रदर्श्योपवेदान् प्रदर्शयति-*इतिहासेति*। इति ह पारम्पर्योपदेश आस्तेऽस्मिन्, इति इतिहासः। (आधारे घञ्) तदुक्तम्—

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्। पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते॥ इति। स चासौ वेदः। धनुषो वेदः धनुर्वेदः। इयोरितरेतरयोगद्वन्द्वः। गन्धर्वस्येदं गान्धर्वम्, तल्लक्षणं यथा—

पदस्थस्वरसंघातस्तालेन संगतस्तथा। प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते॥इति। शरीरेन्द्रियसत्वादिसंयोगोधारि जीवितमायुः। तस्य वेदः। आयुर्वेदः। वेत्ति विन्दयो-रेकस्मात् करणे घञ्। गान्धर्वश्चायुर्वेदश्च तौ। उपवेदास्तद्वत्पूज्यत्वात् तत्तुल्या इत्यर्थः। वेदनिर्देशक्रमेण उपवेदानां निर्दिष्टत्वात्तेषां क्रमशस्तदुपवेदत्वं सूचितम्। यथा ऋग्वेदस्य इतिहासवेदः। यजुषो धनुर्वेदः। साम्नो गन्धर्ववेदः। अथर्वण आयु-र्वेदः। चरणव्यूहे तु—ऋग्वेदस्यायुर्वेद इत्युक्तम्। अस्माकन्तूल्लेखः, इह खल्वायु-र्वेदो नाम यदुपाङ्गमथर्ववेदस्येति, 'विधाताऽथर्वसर्वस्वमायुर्वेदं प्रकाशयन्' इति सुश्रुतभावप्रकाशयोर्मताभ्याम्।

---

चार इतिहासवेद, धनुर्वेद, आयुर्वेद और गान्धर्ववेद ये उपवेद हैं। वेद और उपवेदों से सार लेकर बनाया गया जिसको स्त्री, शूद्र वगैरह पढ़ सकें ऐसा पाँचवाँ नाट्य वेद है ऐसा भरत का मत है।

वर्णिकः पञ्चमो नाट्यवेदः' इति द्रौहिणिः। 'शिक्षा, कल्पो, व्याकरणं,

---

एवं वेदोपवेदान् प्रदर्श्य परकीयमतेन नाट्यस्यापि वेदत्वं व्यवस्थापयति—*वेदेति*। वेदाश्चोपवेदाश्चेति वेदोपवेदाः। ते आत्मानः जनकतया यस्यासौ। सर्वैर्वर्णैः पठितुं योग्यः। (तदर्हतीति ठक्) सार्ववर्णिकः पञ्चमो नाट्यवेदः नाट्यसंज्ञो वेदः। इति द्रुहिणस्य ब्रह्मणः अयं द्रौहिणिः तदनुयायी भरतः। द्रौहिणिनामग्रहणं पूजार्थम्। अनेनैतदुक्तं भवति वेदेषु शूद्रादीनामनधिकृतत्वात् वेदोपवेदेभ्यः सारमाकृष्य तैरप्यध्येतुं शक्यः पञ्चमो नाट्यवेदः ब्रह्मणा पृथक् ससृजे। तदुक्तं नाट्यशास्त्रे—
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः। क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत्॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु। तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च। सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससङ्ग्रहम्। भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम्।
सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्। नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम्॥
एवं संकल्प्य भगवान् सर्ववेदाननुस्मरन्। नाट्यवेदं ततश्चक्रे चतुर्वेदार्थसम्भवम्॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतिमेव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना। एवं भगवता सृष्टो ब्रह्मणा ललितात्मकः॥ इति

मुद्रितपुस्तकेषु त्वत्र 'गेयवेद' इति पाठो वर्त्तते। स तु अनवधानमूलः। नाट्यवेदैकदेशस्यापि तस्य गान्धर्ववेदरूपेण स्वतन्त्रतया स्वीकारात् प्रत्युत एवमुपवर्णितस्वरूपस्य नाट्यवेदस्यैव द्रौहिणेरुक्तत्वाच्च। तथाहि—
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः। नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते।
तेषां तद्वचनं श्रुत्वा मुनीनां भरतो मुनिः। प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति।
श्रूयतां नाट्यवेदस्य संभवो ब्रह्मनिर्मितः। इति।

एवं वेदोपवेदान् परिगणय्य अङ्गानि परिगणयति—*शिक्षेति*। एषां लक्षणमग्रे वक्ष्यति ग्रन्थकृत् स्वयमेव। षट् षट्संख्याकानि, अङ्ग्यते उपक्रियत उपपाद्यते वेदार्थ एभिरिति अङ्गानि वेदार्थोपकारकाणि इति, आचार्याः धर्मार्थकाममोक्षवादिनः वदन्तीति शेषः। तदेव हि शिक्षादीनामङ्गत्वं नाम यद्वेदार्थस्योपपादकत्वमुपकारकत्वं वा। एवं चैतादृशमुपकारकत्वमलंकारेष्वपि। तस्मादलंकारोऽपि वेदस्य सप्तम-

---

शिक्षा वगैरह छहों वेद के अंग हैं ऐसा प्राचीनों का मत है। राजशेखर का कहना है कि अङ्गों का प्रयोजन है वेदार्थ का उपपादन करना। ऐसा वेदार्थोपपादकत्व अलंकार-शास्त्र में भी है। क्योंकि जबतक अलंकार का ज्ञान नहीं होगा तबतक स्थलविशेष में वेदार्थ का ज्ञान नहीं होगा। जैसे-'द्वा सुपर्णा' यह वेद का मंत्र है। यहां पर एक शरीर में रहने वाले जीव और ईश्वर के वैलक्षण्य का दो पक्षियों के व्याज से प्रतिपादन किया गया है,

निरुक्तं, छन्दोविचितिः, ज्यौतिषं च षडङ्गानि' इत्याचार्याः। 'उपकारकत्वादलङ्कारः सप्तममङ्गम्' इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतिः। यथा—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।

---

मङ्गम्-इत्याशयेनाह—*उपेति*। उपकारकत्वाद्वेदार्थोपपादकत्वादलङ्कारोऽलङ्कारशास्त्रं सप्तममङ्गम्। इति यायावरीयः। स्वनामकीर्तनेन मदुपज्ञ एवायमर्थ, इति ध्वन्यते। कथमलङ्कारस्याङ्गत्वमित्यत आह-*ऋते चेति*। तस्य स्वरूपं तत्स्वरूपं तस्य परिज्ञानं तस्मात् काव्यस्वरूपावबोधाद् ऋते विना वेदार्थस्यानवगतिरपरिज्ञानम्। यथा सेयं 'द्वा सुपर्णावि'तिरूपा शास्त्रीया श्रौती उक्तिः। दुर्बोधेति शेषः। अयं भावः—विरुद्धशोकानन्दधर्मिणोरेकस्मिन् शरीरे नियम्यनियन्तृभावेन स्थितयोर्जीवेश्वरयोर्वैलक्षण्यं भगवती श्रुतिरतिशयोक्तिनामालङ्कारेणोपदिशति। यावन्नातिशयोक्तेः स्वरूपं न विज्ञायते तावदस्याः श्रुतेर्भावाकलनं दुःशकम्। तज्ज्ञानं च, अलङ्कारशास्त्राधीनम्। तस्मात् सुष्ठूक्तम् उपकारकत्वादलङ्कारः सप्तममङ्गमिति।

*द्वा सुपर्णाविति*। द्वा द्वावित्यर्थः। अत्र सर्वत्र 'सुपां सुलुगि'ति सूत्रेण औ स्थाने आ—इत्यादेशो विहितः। द्वित्वसंख्याविशिष्टौ पक्षिणौ जीवेश्वररूपौ सुपर्णौ शोभनपक्षशालिनौ। पक्षान्तरे वृक्षात् पृथग्भूतपक्षिणाविव देहात् पृथग्भूतौ। सयुजौ मिलितौ। पक्षान्तरे सदृशौ चिद्रूपत्वात्। सखायौ समानशीलव्यसनौ। पक्षान्तरेऽपि तथैव, अवियोगादुपकार्योपकारितया स्थितत्वात्। समानमेकम्। वृक्षं तरुम् पक्षान्तरे वृश्च्यत इति वृक्षो देहः। 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति स्मृतेः। तं परिषस्वजात आश्रित्य स्थिताविस्यर्थः। तयोर्मध्येऽन्यो जीवरूपः। स्वादु मधुरं पक्षान्तर आपातरमणीयम्। पिप्पलं पिप्पलस्य फलम् पिप्पलम् ( फले लुक् ) पक्षान्तरे कर्मफलं सुखदुःखादिकमत्ति भक्षयति अनुभवति।

---

अतः यहां अतिशयोक्ति अलंकार है। जहां पर प्रस्तुत का अर्थात् जिसका वर्णन करना इसको अभीष्ट है उसका अपने शब्दों में नहीं कहकर अप्रस्तुत के साथ अभेद किया जाता है वहां अतिशयोक्ति अलंकार होता है। जब तक अतिशयोक्ति अलंकार को नहीं जानेगा तबतक उसके मंत्रार्थ का ज्ञान नहीं होगा। और अतिशयोक्ति का ज्ञान 'अलंकार शास्त्र के पढ़ने से होगा। अतः सिद्ध हुआ कि वेदार्थोपपादक होने से अलंकार शास्त्र भी सातवां अङ्ग है।

'द्वा सुपर्णा' इस मंत्र का अर्थ ऐसा है—दो जीव और ईश्वर रूप पक्षी हैं। वे दोनों सुन्दर पंखों वाले हैं। जीवपक्ष में वृक्ष से पृथग्भूत पक्षियों की तरह देह से अलग हैं।

तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥'

सेयं शास्त्रोक्तिः। प्रत्यधिकरणं च ऋचं यजुः सामाथर्वणं ब्राह्मणं चोदाहृत्य भाषामुदाहरिष्यामः। तत्र वर्णानां स्थानकरणप्रयत्नादिभिः निष्पत्तिनिर्णयिनी शिक्षा आपिशलीयादिका। नानाशाखाधीतानां मन्त्राणां

---

अन्य ईश्वररूपः अनश्नन्, अस्वादन् कर्मफलविषयोपभोगरहितः सन्, अभिचाकशीति प्रकाशते नित्यानन्दतृप्तत्वात्, अत्र जीवेश्वरयोः पक्षिताादात्म्येनाध्यवसानात्तयोरतिशयः प्रतीयते, इति 'निगीर्याध्यवसानं तु प्रकृतस्य परेण यद्'िति स्वरूपातिशयोक्तिः। अप्रस्तुताभ्यां पक्षिभ्यां प्रस्तुतयोः जीवेश्वरयोः निगीर्य पृथगनिर्दिश्य अध्यवसानमाहार्याभेदनिश्चय इति लक्षणसङ्गतिः। भेदेऽभेदाध्यवसायात्मिकातिशयोक्तिरियम्। एतमेवार्थमधिकृत्य श्रीमद्भागवतेऽप्युक्तम्—

सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ इति ॥

प्रत्यधिकरणम्, अधिकरणमधिकरणं प्रतीति तथा। प्रत्येकाधिकरणे। भाषां लोकोक्तिम्। उदाहरिष्यामो निरूपयिष्यामः।

प्राङ्निर्दिष्टषडङ्गानां लक्षणं निर्वक्ति-*तत्रेति*। तत्र षडङ्गेषु वर्णानां कचटतपादीनां स्थान ताल्वादि, करणं बाह्यप्रयत्नः, यत्न आभ्यन्तरप्रयत्नः, त आद्यो येषां तैः। निष्पत्तेः निर्णयिनी निश्चायिका शिक्षा। सा च आपिशलीयादिका। आदिपदात् पाणिनियाज्ञवल्क्यादिनिर्मितानां ग्रहणम्। नानाशाखासु नैकविधवेदभागेषु। एकविंशतिः शाखा ऋचः, शतं शाखा यजुषः, सहस्रंशाखाःसाम्नः, नव शाखा अथर्वणः, इत्येवं शाखानां नानात्वम्। अधीतानां पठितानां मन्त्राणां विनियोजकं यो यमर्थमभिधानेन संस्कर्तुं समर्थो मन्त्रस्तस्य तत्र विनियोग इत्येवंबोधकं सूत्रं कात्यायन

---

सयुजौ—दोनों मिले जुले हैं, पक्षान्तर में चैतन्यस्वरूप होनेसे समान हैं। दोनों मित्र हैं। दोनों शरीररूपी एकवृक्ष पर बैठे हैं। उनमें से एक जीवरूपी पक्षी, आपातरमणीय कर्मफलरूपी पिप्पलफलों (विषयभोगों) को खाता (अनुभव करता) है। दूसरा ईश्वररूप पक्षी कर्मफलोंका उपभोग नहीं करता हुआ भी प्रकाशमान होता है क्योंकि वह नित्यानन्द तृप्त है। यह शास्त्रोक्ति अलंकारीय ज्ञान के बिना नहीं जानी जा सकती।

प्रत्येक अधिकरण में वेदों का उदाहरण देकर लौकिक उदाहरण देंगे। जहाँ स्थान और प्रयत्नों के द्वारा वर्णों की उत्पत्ति का विचार हो वह शिक्षा कहाती है। जैसे आपिशलीया शिक्षा। नाना शाखाओं में पढ़े हुए मन्त्रों का विनियोजक सूत्र कल्प है। यह यज्ञन विद्या कहाती है। शब्दों का साधुत्व बतलाने वाला व्याकरण कहलाता है। जिसमें तात्पर्यानुकूल

विनियोजकं सूत्रं कल्पः । सा च यजुर्विद्या । शब्दानामन्वाख्यानं व्याकरणम् । निर्वचनं निरुक्तम् । छन्दसां प्रतिपादयित्री छन्दोविचितिः । ग्रहगणितं ज्यौतिषम् । अलङ्कारव्याख्यानं तु पुरस्तात् । पौरुषेयं तु पुराणम् आन्वी-

---

बौधायनाश्वलायनापस्तम्बप्रभृतिनिर्मितं शास्त्रं कल्पो यागक्रियासमर्थक इति-यावत्। सा पूर्वोक्ता। कल्परूपा इज्यत इति यजुर्यजनं तस्य विद्या शास्त्रम्। शब्दानां सुप्तिङन्तपदानामन्वाख्यानं (कर्त्तरि ल्युट्) साधकं व्याक्रियन्ते व्युत्पाद्यन्ते साधु शब्दा अस्मिन्, इति व्याकरणम्, तदुक्तम्—

प्रकृतिप्रत्ययलोपाधिनिपातादिविभागशः ।
पदान्वाख्यानकरणं शास्त्रं व्याकरणं विदुः ॥ इति ।

*निर्वचनमिति* । निर्वचनं निश्चयेन कथनं निरुक्तम् । वर्णागमादिभिर्निश्चयेनोक्तमित्यर्थः । उक्तञ्च यतः—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

नन्वेवं निरुक्तं व्याकरणान्नातिरिच्यते वर्णागमादीनां तत्रापि दृश्यमानत्वात् । सत्यम् । किन्तु अर्थाभिधानसंयोगान्मन्त्रेषु शेषशेषिभावः कल्प्यते । न हि निरुक्तादृतेऽन्यदङ्ग वाऽन्यच्छास्त्रमस्ति तात्पर्येण यदृशेयान् शब्दान् निर्ब्रूयात्। यच्च व्याकरणेषु निर्वचनं तच्छब्दमात्रस्यैव । तस्माच्छब्दमात्रनिर्वचनं व्याकरणम् । तात्पर्येण शब्दनिर्वचनं निरुक्तमिति भेदः । *छन्दसामिति* । चन्दयन्त्याह्लादयन्ति ( चदि आह्लादे 'चन्देरादेश्च छः' इत्यसुन् चकारस्य छः ) छन्दांसि ह्रस्वदीर्घयतिनियमबोधकवाक्यानि, तेषां प्रतिपादयित्री बोधिका छन्दोविचितिश्छन्दःप्रत्यायकं शास्त्रम् । *ग्रहेति* । ग्रहाणां गणितम्, ज्योतिः सूर्यादिग्रहाणां गत्यादिकं प्रतिपाद्यतयाऽस्त्यस्मिन्निति । ज्यौतिषम् । अलङ्कारस्य काव्यशोभाकरधर्मस्य व्याख्यानं पुरस्तादग्रे पुस्तकान्तरे वक्ष्याम इति शेषः । अस्मिन्नधिकरणेऽस्यादृष्टत्वात् । *पौरुषेयमिति* । यद्यप्यङ्गानामपि पौरुषेयत्वं वर्त्तते तथापि शास्त्राभिप्रायेणेयमुक्तिः । अङ्गानां तूपशास्त्रत्वमतोऽतिक्रम्य पौरुषेयमित्युक्तिरिति न भ्रमितव्यम् । पुरा भवं पुराणम्, वेदव्यासप्रणीतं सर्गादिपञ्चलक्षणान्वितं शास्त्रम् । श्रवणात् प्रत्यक्षपरोक्षाभ्यां वेदितस्यार्थस्य अनु पश्चादीक्षा पर्यालोचनमन्वीक्षा,

---

शब्दों का निर्वचन हो वह निरुक्त कहाता है। छन्दों का प्रतिपादन करने वाली छन्दोविचिति कहाती है। जिसमें ग्रहों का गणित बतलाया हो वह ज्यौतिष कहता है! अलंकारों को फिर किसी पुस्तक में कहेंगे। पौरुषेय वह होता है जिसे किसी पुरुष ने बनाया हो जैसे पुराण, आन्वीक्षिकी, मीमांसा और स्मृतियाँ ये चार शास्त्र हैं। उनमें, प्रायः वेदों की

क्षिकी, मीमांसा, स्मृतितन्त्रमिति चत्वारि शास्त्राणि। तत्र वेदाख्यानोप-निबन्धनप्रायं पुराणमष्टादशधा। यदाहुः—

'सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशविधिः।
जगतो यत्र निबद्धं तद्विज्ञेयं पुराणमिति॥'

'पुराणप्रविभेद एवेतिहासः' इत्येके। स च द्विधा परक्रियापुरा-कल्पाभ्याम्। यदाहुः—

---

सा प्रयोजनमस्याः सा आन्वीक्षिकी अनुमानविद्या। मीमांसा पूज्यविचारकारिशास्त्रम्। वेदार्थस्मारकत्वात् स्मृतिः। तस्यास्तन्त्रं मन्वादिप्रणीतधर्मशास्त्रम्। इतीत्थं चत्वारि चतुःसंख्याकानि शास्त्राणि विद्याः। तत्र पौरुषेयशास्त्रमध्ये। वेदसम्बन्ध्युपाख्यानस्य निबन्धबहुलं पुराणं ब्राह्मपाद्मशैवभेदादष्टादशप्रकारम्। यदाहुः भारत इति शेषः।

ॐसर्ग इतिॐ यत्र येषु ग्रन्थेषु सर्गो महदहङ्कारतन्मात्रादिनवधा सृष्टिः। प्रतिसंहारः प्रतिरूपः सर्गः। ब्रह्मणः सृष्ट्यनन्तरं दक्षादीनां सृष्टिः। तथा चोक्तम्—

रुद्रो विराड् मनुर्दक्षो मरीच्याद्यास्तु मानसाः।
यं यं सर्गं पृथक् चक्रुः प्रतिसर्गः स सम्मतः॥

ॐकल्प इतिॐ। कल्पयति नाशमिति कल्पः ससन्धिचतुर्दशमनुसमयसम्मितः। स च श्वेतवाराहनीललोहितवामदेवप्रभृतित्रयस्त्रिंशत्संख्यात्मकः। मनोः स्वायम्भुवादेरन्तराणि अवसराः। वमत्युद्गिरति पूर्वपुरुषान् विद्यया जन्मना धनेन वा ख्यातानां प्राणिनामेकलक्षणः सन्तानः, अपत्यधारा वा वंशः। तस्य विधिः। एतत्पञ्चकं निबद्धं तत्पुराणं विज्ञेयमिति।

ॐपुराणेतिॐ पुराणप्रविभेद एव पुराणविशेष इतिहासः परक्रियापुराकल्पाभ्यां द्विधा द्विप्रकारः। परिक्रियेतीकारघटितः पाठोऽपपाठः। स्तुतिनिन्दापरकृतिपुराकल्प-

---

आख्यायिकाओंकी जिसमें अधिक रचना हो वह पुराण होता है। वह अट्ठारह प्रकारका है। शास्त्र का लक्षण आचार्यों ने इस प्रकार कहा है—

पुराण किसे कहते हैं यह बतलाते हैं। जिसमें संसार के सर्ग ( सृष्टि ), प्रतिसर्ग ब्रह्मा की सृष्टि के बाद दक्षादिकों की सृष्टि, कल्प, प्रलय, स्वायम्भुवादि चौदह मनुओं के समय, और वंशविधि उपनिवद्ध हों वह पुराण है।

पुराण ही का भेद इतिहास है, ऐसा कोई आचार्यों का मत है। यह दो प्रकार का होता है। एक परक्रियास्वरूप दूसरा पुराकल्पस्वरूप।

'परक्रिया पुराकल्प इतिहासगतिर्द्विधा ।
स्यादेकनायका पूर्वा द्वितीया बहुनायका ॥'

तत्र रामायणं भारतं चोदाहरणे । आन्वीक्षिकीं तु विद्यावसरे वक्ष्यामः । निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री मीमांसा । सा च

---

इत्यर्थवाद इति गौतमसूत्रादिषु अकारघटितस्यैव दर्शनात । एकानुबन्धी कथाविशेषः परक्रिया । अनेकानुबन्धी कथाविशेषः पुराकल्पः । यदाहुराचार्या इति शेषः ।

*परेति*। इतिहासः पुरावृत्तं तस्य गतिः स्वरूपम् । गतिशब्दोऽत्र स्वरूपार्थः । किरातेऽपि तदर्थो गतिशब्दो दृश्यते यथा—'चरतस्तपस्तव वनेषु सहा, न वयं निरूपयितुमस्य गतिम्' तव वनेषु तपश्चरतोऽस्य गतिं स्वरूपं निरूपयितुं न सहा, इति मल्लिनाथः । द्विधा परक्रियापुराकल्पभेदाभ्याम् । पूर्वा इतिहासगति परक्रिया, एको नायको नेता कथाया यस्यां सा एकनायका स्यात् । द्वितीया गति बहवो नायकाः कथाया यस्यां सा बहुनायका ।

*तत्रेति* । तत्र तयोर्मध्ये रामस्य चरितान्वितमयनं शास्त्रं रामायणम् । अ सर्वेषां कथाभागानां राममनुप्रवृत्तत्वात् स एवैकः प्रधानो नायकः । अतः प क्रियास्वरूपम् । भरता भरतवंशीया व्याख्यायन्तेऽस्मिन् । 'तस्य व्याख्या इत्यधिकारेणाणृगयनादिभ्य इत्यण् । तद् भारतम् । अत्रत्याः कथाभागास्तत्र ष्मादिनायकाननुप्रवृत्तास्ततो भीष्मद्रोणकर्णप्रभृतयो बहवो नायका अत एव पुराकल्पस्वरूपम् । निगमो वेदः । तस्य वाक्यानां पदोच्चयानां सहस्रेण ( एकव विंशत्याद्या इति वचनात् ) सहस्रमित्यनेकोपलक्षणम् तेन अनेकैरिति यावत नीयन्ते प्राप्यन्ते विवक्षितार्था येनासौ न्यायो युक्तिस्तैः विवेक्त्री परस्परविरो व्यावृत्त्या वस्तुस्वरूपनिर्णेत्री मीमांसा । सा मीमांसा द्विप्रकारा । एका विधेरहरा

---

जैसा कि कहा है—इतिहास का स्वरूप दो प्रकार का होता है । एक परक्रिया, दूस पुराकल्प । जिसमें एक नायक-सम्बद्ध कथोपकथाएँ हों वह परक्रियास्वरूप, जिसमें अने नायकसम्बद्ध कथोपकथाएँ हों वह पुराकल्पस्वरूप कहाता है ।

जैसे रामायण और भारत उदाहरण हैं । रामायण में जितनी कथाएँ हैं वे सब राम के कथानुकूल हैं अतः यह परक्रियास्वरूप है और भारत में भीष्म, द्रोण प्रभृति अ नायकानुकूल कथाएँ हैं । अतः यह पुराकल्पस्वरूप है ।

आन्वीक्षिकी का स्वरूपनिर्देश विद्याओं के अवसर में करेंगे । वेद के वाक्यों का एज न्यायों से विवेचन करने वाली मीमांसा कहलाती है । वह मीमांसा दो तरह की है— विधिवाक्यों का विचार करने वाली, दूसरी ब्रह्म का प्रतिपादन करने वाली । श्रुत्यर्थ स्मारिकाएँ स्मृतियाँ अट्ठारह प्रकार की भी होती हैं । इस तरह चौदह विद्याओं

द्विविधा विधिविवेचनी ब्रह्मनिदर्शनी च। अष्टादशैव श्रुत्यर्थस्मरणात्स्मृ-
तयः। 'तानीमानि चतुर्दश विद्यास्थानानि, यदुत वेदाश्चत्वारः, षडङ्गानि,
चत्वारि शास्त्राणि' इत्याचार्याः। तान्येतानि कृत्स्नामपि भूर्भुवःस्वस्त्रयीं
व्याप्य वर्त्तन्ते। तदाहुः—

विद्यास्थानानां गन्तुमन्तं न शक्तो जीवेद्वर्षाणां योऽपि साग्रं सहस्रम्।
तस्मात्सङ्क्षेपादर्थसन्दोह उक्तो व्यासः संत्यक्तो ग्रन्थभीरुप्रियार्थम्॥'
'सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्' इति याया-

---

सन्ध्यामुपासीतेति वाक्यसमुदायस्य विवेचनी विचारयित्री। द्वितीया ब्रह्मणो निद-
र्शिनी प्रतिपादिकेति यावत्। श्रुत्यर्थस्मरणात् स्मृतयो मन्वादिप्रणीतधर्मशास्त्राणि
अष्टादशैव। एवशब्दः सादृश्ये तेन मन्वाद्यष्टादशप्रणीतस्मृतिसदृशा अन्या अपि
स्मृतयो गृह्यन्ते। तानीमानि निर्दिश्यमानानि चतुर्दशविद्यानां स्थानानि अधिक-
रणानि। कृत्स्नां सर्वाम्। भूरिति भूरादित्रिलोकत्रयीं व्यासज्य व्याप्य वर्त्तन्ते। तदाहु-
राचार्या इति शेषः।

❀विद्येति❀। यः कश्चित् साग्रं प्रधानम्।

'अग्रं पुरस्तादुपरि परिमाणे पलस्य च॥
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्।
अधिके च प्रधाने च प्रथमे चाभिधेयवत्॥' इति मेदिनी।

वर्षाणामब्दानां 'पुन्नपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु' इति रुद्रः। सहस्रमपि
दिव्यं वर्षसहस्रमिति यावत् जीवेत् प्राणान्धारयेत्। तथापि विद्यास्थानानां शास्त्रा-
धिकरणानामन्तं पारं गन्तुं यातुं न शक्तः समर्थः। तस्मात् शास्त्रपाराप्रापणात् संक्षे-
पात् समासेन अर्थानां सन्दोहः समूहः। 'समूहनिवहव्यूहसन्दोहविसरव्रजाः'
इत्यमरः। उक्तः कथितः ग्रन्थाच्छादनात्, अर्थात् शास्त्रपठनाद् भीरवः सभयाः तज्ज-
न्यायासेनेत्यर्थः। प्रियाः सुकुमारा बालाः। बालानामतिशयप्रीणनकारित्वात्प्रिये-

---

अधिकरण हैं—चार वेद, छः अंग और चार शास्त्र। ऐसा आचार्य कहते हैं। ये चौदह
विद्याएँ सम्पूर्ण त्रिलोकी में व्याप्त हैं।

जैसा कि कहा है—दिव्य सहस्रवर्ष जीने पर भी मनुष्य इन विद्याओं का पार नहीं
पा सकता है। इसलिए ग्रन्थ पढ़ने में भीरु प्रिय बालकों के लिए विस्तार छोड़कर संक्षेप
में सम्पूर्ण अर्थ-समुदाय कहा है।

काव्य भी विद्यास्थानों में एक है इस बात को सिद्ध करते हैं। सकल विद्याओं का एक

षरीयः । गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च । तद्धि शास्त्राण्यनुधावति । 'वार्त्ता कामसूत्रं शिल्पशास्त्रं दण्डनीतिरिति पूर्वैः सहाष्टादशविद्यास्थानानि' इत्यपरे । आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति

---

त्युक्तिः । तेभ्य इदम् । 'अर्थेन नित्यसमासो विशेष्यलिंगता चे'त्यस्वपदविग्रहो नित्यसमासः । व्यासो विस्तरः संत्यक्तः । बालानां सुखबोधाय व्यासमुत्सृज्य संक्षेपेण सर्वे काव्यौपयिकाः पदार्था निर्दिष्टा इति भावः । अथवा ग्रन्थात् ग्रन्थाध्ययनाद्, विषयवाचकपदेन विषयी लक्ष्यते । भीरुर्या प्रियाऽवन्तिसुन्दरी तदर्थम् । इति ।

काव्यमपि विद्यास्थानेष्वन्यतममिति व्यवस्थापयति । ॐसकलेतिॐ । सकलानां सांगानां विद्यास्थानानां वेदादीनां वर्णनाकोटिनिविष्टत्वात् एकायतनं काव्यं पञ्चदशं विद्यास्थानं शास्त्राधिकरणम् । कथं काव्यस्य विद्यास्थानत्वमित्यत आह-ॐगद्येतिॐ । गद्यं च पद्यं चेति गद्यपद्ये त एव स्वरूपमस्येति स्वरूपार्थे मयट् तस्य । तस्य भावस्तत्वं तस्मात् । कवेर्धर्मो रचनात्मा । तस्य भावस्तत्वं तस्मात् । हितमुपदिशतीति कर्तरि ण्वुल् । तस्य भावस्तत्वं तस्मात् । तद्धि काव्यं हि शास्त्राणि विद्या अनुधावति अनुसरति । शास्त्रपूर्वकत्वात्काव्यानामित्युक्तेः । अनुधावंतीति बहुवचनान्तोऽपपाठः । एतादृशपाठे शास्त्राणि काव्यमनुसरन्तीत्यनेन काव्यपूर्वकत्वं शास्त्राणामायाति तत्र युक्त्यागमविरोधः स्वोक्तिविरोधश्च । केचिदष्टादश प्राहुः विद्यास्थानानि तन्निदिशति ॐवार्त्तेतिॐ । वृत्तिर्जीविका यस्यामस्तीति ( प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः इति णस्ततष्टाप् ) वार्ता कृषिगोरक्षवणिज्याकुसीदरूपा । काम्यतेऽसौ ( कर्मणि घञ् ) कामस्तस्य सूत्रणात् सूत्रम् । शिल्पं कलादिकं कर्म । तस्य शास्त्रम् । इकारमध्यपाठे शिल्पिनां शास्त्रं शिल्पमेव । दण्डः आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनः । तस्य नीतिः नयः, अर्थात् तदुपदेशकं शास्त्रम् । इत्यादीनि चत्वारि विद्यास्थानानि । वेदतदङ्गादिभिः सह सम्भूयेत्यर्थः । विद्यास्थानान्यष्टादश इत्यपरे जगदुरिति शेषः । ॐआन्वीतिॐ-एषां स्वरूपं पूर्वमुक्तम् । परेषां विद्याविकल्पान्दर्शयति-ॐदण्डेतिॐ । केवलं दण्डनीतिरेका विद्येति औशनसाः शुक्रशिष्याः । कुतः । हिरेवार्थः । तन्नयादेव सर्वा त्रिलोकी निजकर्मसु सावहिता प्रवर्तते । न त्वितरथा । अत एवाहुः । दण्डः सुप्तेषु जागर्ति ।

'सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित् ।
दण्डस्य हि भयात्कृत्स्नं जगद् भोगाय कल्पते ॥' इति ।

---

स्थान काव्य भी पन्द्रहवाँ विद्यास्थान है । जैसे और-और शास्त्र गद्यपद्यमय कविधर्म और हितोपदेशक हैं उसी तरह काव्य भी गद्यपद्यमय कविधर्म और हितोपदेशक है । वह काव्य

विद्याः। 'दण्डनीतिरेवैका विद्या' इत्यौशनसाः। दण्डभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते। 'वार्त्ता दण्डनीतिर्द्वे विद्ये' इति बार्हस्पत्याः। वृत्तिर्विनयग्रहणं च स्थितिहेतुर्लोकयात्रायाः। त्रयीवार्त्तादण्डनीतयस्तिस्रो विद्याः' इति मानवाः। त्रयी हि वार्त्तादण्डनीत्योरुपदेष्ट्री। 'आन्वीक्षिकीत्रयीवार्त्तादण्डनीतयश्चतस्रो विद्याः' इति कौटल्यः। आन्वीक्षिक्या हि विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवति। 'पञ्चमी साहि-

---

बृहस्पतिशिष्याणां मतमाह—वार्ता दण्डेत्यादि। कुतः विनयमूलो दण्डः लोकानां योगक्षेमावहः। इति भावः। मनुशिष्याणां मतं व्याकरोति—त्रयीति। त्रय्या उपयोगमाह*त्रयीति*। कौटल्यमतमवतारयति *आन्वीति*। कुटलो नाम कश्चिदृषिस्तस्य गोत्रापत्यं यत् कौटल्य इति। इकारघटितस्तु कुत्सितस्वार्थकः। यथाचोक्तं नानार्थार्णवे—

'अथ स्यात् कुटलो गोत्रकृदृषौ पुंसि नप् पुनः।
विद्यादाभरणेऽथ स्त्रि; कुटिलं कुञ्चिते भवेत्॥' इति।

आन्वीक्षिक्येति। वार्तादण्डनीत्योरुपदेशे प्रभवति। एवं प्रसंगात् साहित्यस्यापि चतुर्विद्यातिरिक्तत्वमुपदिशति। *पञ्चेति*। साहित्यविद्या हि आन्वीक्षिक्यादिचतसृणामपि विद्यानां निस्यन्दः सारः। कथमिमा विद्या इति शंकामपनुदन् निर्वचन-

---

शास्त्रों का अनुकरण करता है। कोई कहते हैं कि पहले के चौदह और वार्ता, कामसूत्र, शिल्पशास्त्र और दण्डनीति मिलकर अट्ठारह विद्यास्थान हैं।[1] आन्वीक्षिकी, त्रयी, वार्ता और दण्डनीति ये विद्याएं हैं। शुक्राचार्य के अनुयायियों का मत है कि दण्डनीति ही एक विद्या है, क्योंकि दण्डभय से ही यह संसार अपने-अपने कार्य में सावधान रहता है। बृहस्पति के अनुयायी कहते हैं कि वार्त्ता और दण्डनीति ये ही दो विद्याएं हैं क्योंकि आजीविका और शिक्षा यही दो संसार की स्थिति के कारण हैं। मनु के अनुयायियों का मत है कि त्रयी, वार्ता और दण्डनीति ये तीन विद्याएं हैं; क्योंकि त्रयी ही से वार्ता

---

१. यहाँ का सब विषय कामन्दकीय नीतिसार में यों लिखा है—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती। विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम्
त्रयी वार्त्ता दण्डनीतिरिति विद्येति मानवाः। त्रय्या एव विभागोऽयं सेयमान्वीक्षिकी मता॥
वार्त्ता च दण्डनीतिश्च द्वे विद्ये इत्यवस्थिते। लोकस्यार्थप्रधानत्वाच्छिष्याः सुरपुरोधसः॥
एकैव दण्डनीतिस्तु विद्येत्यौशनसी स्थितिः॥
तस्यां तु सर्वविद्यानामारम्भाः समुदाहृताः। विद्याश्चतस्र एवैता इति नो गुरुदर्शनम्॥

त्यविद्या' इति यायावरीयः। सा हि चतसृणामपि विद्यानां निस्यन्दः। आभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्। तत्र त्रयी व्याख्याता। द्विधा चान्वीक्षिकी पूर्वोत्तरपक्षाभ्याम्। अर्हद्भदन्तदर्शने लोकायतं च पूर्वः पक्षः। साङ्ख्य न्यायवैशेषिकौ चोत्तरः। त इमे षट् तर्काः। तत्र च

---

भङ्गया तत्त्वमाख्यापयति—*आभिरिति*। विद्यात्वं धर्माद्यर्थवेदनकरणत्वम्। तत्प्रक्षस्वपि समानम्। त्रयोव्याख्यानमुपसंहरति—*तत्रेति*। व्याख्याताः स्वरूपेण निर्दिष्टाः। एवं त्रयीं व्याख्यायान्वीक्षिकीं निरूपयति—*द्विधेति*। पूर्वोत्तरयोर्द्वन्द्वः। ततः कर्मधारयः। एवं द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते। इत्यनुसारात्। पूर्वपक्षेण, उत्तरपक्षेणेत्यर्थः। तत्र पूर्वं पूर्वपक्षं दर्शयति-*अर्हेति*। अर्हद्भदन्ताभ्यां निर्मिते दर्शने। मध्यमपदलोपी समासः। लोकेष्वायतं विस्तीर्णमेवेति। चार्वाकादिसम्मतं तर्कशास्त्रम्। चः समुच्चये। उत्तरपक्षमाह—*सांख्यमिति*। सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यक्ज्ञानम्। तस्यां प्रकाशमानमात्मतत्त्वं सांख्यं प्रकृतिपुरुषान्यताख्यातौ मोक्ष इति प्रतिपादकं कापिलं शास्त्रम्। नीयन्ते प्राप्यन्ते पदार्था अनेनासौ न्यायः। गौतममुनिप्रणीतं शास्त्रम्। विशेषमधिकृत्य कृतो ग्रन्थो वैशेषिकः कणभुक्प्रणीतं शास्त्रम्। न्यायश्च वैशेषिकश्च न्यायवैशेषिकौ। संगृह्णीते—*त इम इति*। पूर्वोक्तषट्तर्कविषयं दर्शयति। *तत्रेति*। तत्र षट्तर्काणां मध्ये तिस्रः कथा नानावक्तृकपूर्वपक्षसिद्धान्तवद्वाक्यसंदर्भा भवन्ति।

---

और दण्डनीति का उपदेश मिलता है। चाणक्य कहता है कि आन्वीक्षिकी वगैरह चार विद्यायें हैं क्योंकि जब त्रयी का आन्वीक्षिकी द्वारा विवेचन करेंगे तभी त्रयी वार्ता, और दण्डनीति का उपदेश कर सकती है। राजशेखर कहता है कि साहित्य पाँचवीं विद्या है। जैसे पुष्प पेड़ का सार होता है वैसे ही यह साहित्य विद्या चारों विद्याओं का सार है। इनके विद्या मानने में युक्ति बतलाते हैं।' इनको विद्या इसलिये कहते हैं कि इनके द्वारा धर्मार्थ का ज्ञान होता है। उन विद्याओं में आन्वीक्षिकी पूर्वपक्ष और उत्तर पक्ष इस तरह दो प्रकार की है, जिसमें अर्हत् दर्शन, भदन्तदर्शन और लोकायतिक (चार्वाक) का मत पूर्वपक्ष और न्याय, वैशेषिक और सांख्य उत्तर पक्ष हैं। इन ही छहों का नाम तर्क है। इन तर्कोंमें तीन कथाएँ होती हैं—वाद, जल्प और वितण्डा।

---

१. यहाँ राजशेखर ने विद्याओं में विद्यात्व क्या है इसके उत्तर में लिखा है कि इनको विद्या इसलिए कहते हैं कि इनके द्वारा धर्म और अर्थ का ज्ञान होता है किन्तु कामन्दकीय नीतिसार में ऐसा लिखा है—

विद्याद् यदाभिर्निपुणश्चतुर्वर्गमुदारधीः। विद्यात्तदासां विद्यात्वं विदिर्ज्ञाने निरुच्यते।

तिस्रः कथा भवन्ति वादो, जल्पो, वितण्डा च। मध्यस्थयोस्तत्त्वावबोधाय वस्तुतत्त्वपरामर्शो वादः। विजिगीषोः स्वपक्षसिद्धये छलजातिनिग्रहादिपरिग्रहो जल्पः। स्वपक्षस्यापरिग्रहित्री परपक्षस्य दूषयित्री वितण्डा। कृषिपाशुपाल्ये वणिज्या च वार्त्ता। आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डस्तस्य नीतिर्दण्डनीतिः तस्यामायत्ता लोकयात्रेति शास्त्राणि। सामान्यलक्षणं चैषाम्—

---

ताश्च वादेत्यादिकाः। वादादीनां स्वरूपं कथयति—मध्यस्थेति। मध्यस्थयोर्वादिप्रतिवादिशास्त्रार्थनिर्णेतृत्वेन मध्यगतयोः। परामर्शो निश्चयः। विजिगीषोर्जयैषिणः स्वमतस्थापनाय छलस्य, जातेः, निग्रहस्य, आदिशब्दात्स्थानस्य परिग्रहः। स्वीकरणं यत्रासौ जल्पः। अपरिग्रहित्री अस्थापयित्री छलादिभिरन्यमतविदूषिका वितण्ड्यते विहन्यते परपक्षोऽनयासौ वितण्डा स्वपक्षास्थापना परपक्षव्युदास इति यावत्। इदमासां तत्त्वं जल्पवितण्डे तु विजिगीषोः शक्तिपरीक्षामात्रफले। वादस्तु वीतरागयोरपि गुरुशिष्ययोर्वा तत्त्वनिरूपणफल इति। वार्तादीनां स्वरूपं निर्दिशति ॐकृषीतिॐ। कृषिः क्षेत्रबीजवापपरिकर्मोपदेशकं शास्त्रं पाराशरम्। तथा चोक्तम्। फलस्यवेषिता स्वर्णं दैन्यं सैषानवेषिता। कृषिःकृषिपुराणज्ञ इत्युवाच पराशरः। इति।

पाशुपाल्यं गवाश्वादिरक्षाप्रकारोपदेशकं शास्त्रम्। गौतमशालिहोत्रादिप्रणीतम्। अनयोरितरेतरयोगद्वन्द्वः। वणिज्या क्रयविक्रयव्यवहारः। तत्तन्त्रं विदेहराजप्रणीतमिति बोध्यम्। ॐयोगेतिॐ। अलब्धलाभो योगः। लब्धरक्षणं क्षेमः। तयोः साधनः सिद्धिकर्ता। तस्यां दण्डनीत्यामायत्ता अधीना लोकयात्रा लोकव्यवहारः। इत्येवंरूपाणि शास्त्राणि वर्तन्त इति भावः। एषां शास्त्राणां सामान्यलक्षणं साधारणलक्षणमपि यथा—

---

मध्यस्थों के तत्त्वनिर्णय के लिए वस्तुतत्त्व का चिन्तन वाद कहाता है। विजिगीषु का अपने पक्ष सिद्ध करने के लिए छल, जाति, निग्रह प्रभृति को काम में लाने को जल्प कहते हैं। परपक्ष को दबाते रहना और अपने पक्ष का स्थापन नहीं करना वितण्डा कहाता है। क्रमप्राप्त वार्तादि का स्वरूप कहते हैं। पराशर का बनाया हुआ कृषिशास्त्र, गौतम शालिहोत्रादि का बनाया हुआ पाशुपाल्यशास्त्र और विदेहराज का बनाया हुआ वणिज्याशास्त्र इनको वार्त्ता कहते हैं। दण्ड ही के ऊपर आन्वीक्षिकी आदिकों का योगक्षेम निर्भर है, उसकी नीति दण्डनीति कहलाती है। उसी के अधीन लोकयात्रा है। इस तरह ये शास्त्र हुए। इसका सामान्य लक्षण यह है कि—

'सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः ।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः ॥'

सूत्रादिभिश्चैषां प्रणयनम् । तत्र सूत्रणात् सूत्रम् । यदाहुः—

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः ॥

---

※सरितामिति※। सरितां नदीनां प्रवाहा जलस्रोतांसीव पूर्वं प्रथमं निर्झरनिर्गमनावसरे । पश्चान्तर आरम्भे तुच्छा ह्रस्वाः सूत्ररूपेण स्थितत्वात् संक्षिप्ता यथोत्तरमुत्तरोत्तरं विपुला दीर्घा व्याख्याभाष्योदाहरणैर्विस्तृता ये शास्त्राणां समारम्भा उपक्रमा भवन्ति वर्त्तन्ते, ते लोकस्य जनस्य वन्द्या वन्दनीयाः । यथा सरितां प्रवाहा निर्झरनिर्गमनावसरेऽल्पाः स्थलविशेषं प्राप्य महान्तश्च भवन्ति, तथैव शास्त्रसमारम्भा अपि संक्षिप्ता विस्तृताश्च भवन्तीति भावः ।

पूर्वमुक्तं शास्त्रसमारम्भाः प्रथमं लघवस्ततो विपुलाः, तत्कथं लघुत्वविपुलत्वद्वयमभिप्रायवानाह—सूत्रादिभिरिति । एषां शास्त्राणां प्रणयनं रचना सूत्रादिभिरादिशब्दाद्भाष्यवार्तिकवृत्तिप्रभृतिभिः भवतीति शेषः । अयं भावः । सूत्रादिभिः सूक्ष्मता व्याख्याभाष्यादिभिः वैपुल्यं शास्त्राणां प्रणयने भवतीति ।

किं तत्सूत्रादिकमिति प्रसंगाच्छिष्यजिज्ञासायामुत्तरयति—तत्रेति । तत्र सूत्रादीनां मध्ये सूत्रणात्पदार्थस्य वेष्टनात् सूत्रम् ( सूत्र वेष्टने इति अच् ) यथा वेष्टने स्थितं वस्तु अविश्रृङ्खलं सत् सङ्कुचितं सुरक्षितं तथा कीटादिकृतविकृतिशंकारहितं च भवति तथैतदपि सूत्रम् अस्तोभमल्पाक्षरमसंदिग्धमनवद्यं वर्तते । यदाहुरग्निपुराणे व्यासपादाः—

※अल्पेति※। अल्पाक्षरम्, असन्दिग्धम्, बहूनामपि लक्ष्याणां साधुत्वबोधनात् सारवत्, क्वचिदनुवृत्त्या क्वचिच्चापकर्षणात्पूर्वत्र परत्र चानुग्राहकत्वाद्विश्वतोमुखम् । अस्तोभं निरर्थकशब्दशून्यम्, अत एवानवद्यम्, एवम्भूतं सूत्रकृतो विदुः ।

---

जिस प्रकार नदियों के प्रवाह पहले छोटे होते हैं और पीछे स्थानविशेष पर बड़े हो जाते हैं उसी तरह शास्त्र-समारम्भ भी छोटे-बड़े होते हैं और वे संसार के वन्दनीय होते हैं।

सूत्रवृत्ति[1] भाष्यादि के द्वारा इनकी ( शास्त्रों की ) रचना होती है। सूत्र का लक्षण

---

१. शास्त्रों की रचना सूत्रों से होनी चाहिए ऐसी शिवजी की आज्ञा है । यथा—
शास्त्रं निर्णायकं न्याय्यकलापं मुनिसत्तमाः । सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु ॥
इति भाष्यप्रदीपोद्द्योतच्छायायाम् ।

सूत्राणां सकलसारविवरणं वृत्तिः। सूत्रवृत्तिविवेचनं पद्धतिः। आक्षिप्य भाषणाद्भाष्यम्। अन्तर्भाष्यं समीक्षा। अवान्तरार्थविच्छेदश्च सा। यथासम्भवमर्थस्य टीकनं टीका। विषमपदभञ्जिका पञ्जिका। अर्थप्रदर्शनकारिका कारिका। उक्तानुक्तदुरुक्तचिन्ता वार्तिकमिति शास्त्रभेदाः।

---

॥आक्षिप्येति॥। लक्ष्यानुरोधान्नूतननियमनिर्माणमन्यथा स्थितस्य खण्डनं व्याख्यानान्तरं चाक्षेपः, तं कृत्वा। समीक्षा भाष्यमध्ये भवति। किं तस्याः स्वरूपमित्याकांक्षायामाह—॥अवान्तरेति॥। सा च समीक्षा च अवान्तरस्य प्रधानान्तःपातिनोऽर्थस्य विशेषेण (छेदनं छेदः) छेदनं कल्पनम्, 'छेदनं कर्त्तने भेदे कल्पने वर्द्धनेऽपि च' इति हेमचन्द्रः। भाष्यमध्येऽवान्तरार्थविशिष्टकल्पनं समीक्षा, इति निष्कर्षः। यथास्थितपाठेऽयमर्थः। परन्त्वत्रत्यः पाठो विच्छिन्न इव प्रतिभाति। नाश्चर्यम्। बहुकालात्यये दृढानामपि जीर्णता सम्पद्यते का कथा तालपत्राणां करस्पर्शेऽपि मर्मरितानाम्। एवमत्र पाठो भवेत्। यथा अवान्तरार्थविच्छेदश्चूर्णिः। तथा च चूर्णिः महाभाष्यम्। चूर्णयति खण्डयति निखिलपण्डितानां तर्कमिति 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि' इत्युणादिसूत्रेण निपात्यते। चूर्णिः पातञ्जलं व्याकरणं महाभाष्यम्, इति लिंगादिसंग्रहटीकायां भरतः। चूर्णिं भाष्यं करोतीति चूर्णिकृत् भाष्यकारः गोनर्दीयः पतञ्जलिः इति त्रिकाण्डशेषः। इत्थं च सामान्यविशेषाभ्यां भाष्यलक्षणं निरुक्तमिति पूर्वापरमविरुद्धम्। टीकनमिति। टीकेर्गत्यर्थत्वाट्टीकनं बोधनम्। ॥विषमेति॥। विषमाणि दुरूहाणि पदानि भनक्ति, इति पञ्जिका। पच्यन्ते व्यक्तीक्रियन्तेऽर्था अनयेति। पृषोदरादित्वात्साधुः। ॥उक्तेति॥। उक्ताश्चानुक्ताश्च दुरुक्ताश्चेति, उक्तानुक्तदुरुक्तास्तेषां चिन्तनं चिन्ता वार्तिकम्।

---

अग्निपुराण में इस प्रकार कहा है—जो अल्पाक्षर हो, सन्देहरहित हो, सारवत् हो तथा विश्वतोमुख हो, निरर्थकशब्दशून्य हो और निर्दोष हो उसे सूत्रकार सूत्र कहते हैं।

जो सूत्रों के सम्पूर्ण सार का विवरण करे उसे वृत्ति कहते हैं। जो सूत्र और वृत्ति का विवेचन करे उसे पद्धति कहते हैं। लक्ष्य के अनुरोध से नूतन नियम निर्माण करना और अन्यथास्थित का खण्डन करके व्याख्यानान्तर करना आक्षेप कहलाता है और आक्षेप करके जो व्याख्या की जाती है उसे भाष्य कहते हैं। उस भाष्य के अवान्तर विचार का नाम समीक्षा है। यथासम्भव अर्थ का बोधन जहां रहता है उस व्याख्या का नाम टीका है। विषम (कठिन) पदों का खुलासा अर्थ जिसमें रहता है उसका नाम पञ्जिका है। अर्थ का प्रदर्शन करनेवाली कारिका होती है। सूत्रकार ने जिसको कह दिया

'भवति प्रथयन्नर्थं लीनं समभिप्लुतं स्फुटीकुर्वन् ।
अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः '

शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् । अध्यायादयस्त्ववान्तरविच्छेदाः

---

एवमुपदर्शितस्वरूपाणि शास्त्राणि कवनविषयभूततयाश्रित्य काव्यमार्गे विहरति स शास्त्रकविर्भवतीत्यभिप्रायेणाह । ⊛भवतीति⊛ । लीनं प्रच्छन्नमर्थं प्रथयन् विशदयन् समभिप्लुतमाकीर्णसङ्गतिरहितमिव ज्ञायमानमस्फुटमिति यावत् । स्फुटीकुर्वन् स्पष्टं कुर्वन् अनल्पं सविस्तरं वस्तु ( यथाप्रयोजनम् ) अल्पं रचयन् निर्मिमाणः, अल्पं च संक्षिप्तं च वस्तु ( यथाप्रयोजनम् ) अनल्पं सविस्तरं रचयन् निर्मिमाणः शास्त्रकविर्भवति । तमुपाधिं लभत इति भावः ।

अथ शास्त्राणि प्रदर्श्य शास्त्रैकदेशान् निरूपयति—⊛शास्त्रेति⊛ । शास्त्रस्यैकदेशः शास्त्रैकदेशः, तस्य प्रक्रिया प्रस्तावोऽधिकारो वा । अध्यायेति-अवान्तरे मध्ये विच्छेदा विरामाः । एतत्स्वरूपा अध्याया इत्यर्थः । त आदिभूता येषां ते अध्यायादयो ग्रन्थसन्धिप्रभृतयः । आदिशब्दात् सर्गादयोऽपि ग्राह्याः, तथा च संग्रहश्लोकः । सर्गो वर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः । उच्छ्वासः परिवर्तश्च पटलः काण्डमेव च ॥

स्थानं प्रकरणं चैव पर्वोल्लासाह्निकानि च ।
स्कन्धश्च स्तबकोद्योतौ पादोऽमी ग्रन्थसन्धयः ॥ इति ।

---

और नहीं कहा तथा अशुद्ध कहा गया है इन सब की चिन्ता जिसमें की गई हो उसे वार्तिक[1] कहते हैं । इस तरह ये शास्त्रों के भेद हुए ।

जो ऊपर दिखाए हुए शास्त्रों को काव्य में वर्णित करता है वह शास्त्रकवि हो जाता है इस बात को स्फुट करने के लिए कहते हैं—जो विद्वान् छिपे हुए को खुलासा करता है और जो संगतिरहित की तरह मालूम पड़ता है, उसे संगत करता है और प्रयोजन के अनुसार अल्प की अधिक, अधिक की अल्प रचना करता है वह शास्त्रकवि हो जाता है ।

शास्त्र के एकदेश की प्रक्रिया का नाम प्रकरण[2] है । अध्याय वगैरह का परिगणन करके निर्देश इसलिये नहीं किया कि पण्डित लोग उनका नाम अपनी इच्छा से जैसा चाहते हैं वैसा कर लेते हैं इस वास्ते वे अपरिमेय हैं और कहे भी नहीं जा सकते हैं ।

---

१. उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते । तं ग्रंथं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥
इति भाष्यप्रदीपोद्द्योतच्छायायाम् ।

२. शास्त्रैकदेशसंसिद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम शास्त्रभेदविचक्षणः ॥
इति भाष्यप्रदीपोद्द्योतच्छायायाम् ।

कृतिभिः स्वतन्त्रतया प्रणीता इत्यपरिसङ्ख्येया अनाख्येयाश्च। शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या । उपविद्यास्तु चतुःषष्टिः। ताश्च कला इति विदग्धवादः। स आजीवः काव्यस्य। तमौपनिषदिके वक्ष्यामः।

---

स्वतन्त्रतया यदृच्छया प्रणीता निर्मिता इत्यतोऽपरिसंख्यातुं योग्या गणयितुमशक्याः, अनाख्येया आख्यातुं दुःशकाः।

ननु पञ्चमी साहित्यविद्येति प्रोक्तं किन्तु स्वरूपं न निर्दिष्टं तत्किं तस्याः स्वरूपमिति जिज्ञासायामुत्तरयति—॥शब्दार्थयोरिति॥। यथावत् सहभावेन सहृदयाह्लादकारिपरस्परसुभगसाम्येन स्थितयोः शब्दार्थयोर्विद्या शास्त्रं साहित्यविद्या अलङ्कारादिप्रतिपादकशास्त्रम्। ताश्चेति। ताश्चतुःषष्टिरुपविद्याः कलाः सन्तीत्येवं विदग्धानां वादः। चतुःषष्ट्युपविद्यानामेव कलात्वेन विद्वत्समाजे प्रसिद्धिरिति भावः।

स विदग्धवादःकाव्यस्य अस्या काव्यकर्तुराजीव उपजीवनम्। कलानां बहुशो वर्णनीयत्वात्। अयं भावः। यथा विद्या अवश्यमुपादेया एवमधीतिबोधाचरणप्रचारणैरुपयोज्यास्तथैव कला अप्युपादेया उपयोज्याश्चेति विद्वत्समाजे प्रसिद्धिः। तथा प्रसिद्धयैव ता उपैगृह्य अधीत्यादिभिरुपयुज्यन्ते स्थलविशेषमनुवर्ण्यन्ते च। अन्यथाऽज्ञाने कलानां तत्तत्स्थलेषूपनिबन्धनमशक्यमसम्भवि च। इति। इदं तु बोध्यम् यथा कलास्तथा उपकला अपि वर्तन्ते। तत्र कलाश्चतुःषष्टिः। उपकलास्तु चतुःशतम्। तत्र प्राधान्यात्केवलं कलानां निर्देशोऽस्माभिः क्रियते। अन्यास्तु आकरेभ्यो ज्ञातव्याः। विस्तरभीतैस्तु विरम्यते। यथा—

नृत्तं गीतं तथा वाद्यमालेख्यं मणिभूमिका। दशनाद्यङ्गरागश्च माल्यगुम्फविचित्रता॥
वेणुवीणादिकालापपाटवं शेखरक्रिया। नेपथ्यं गन्धयुक्तिश्च कर्णपत्रक्रियाभिधाः॥
विशेषभेद्यकल्पिश्च नानाभूषणयोजनम्। इन्द्रजालं कौचिमारं सामुद्रं हस्तलाघवम्॥
सूचीवानक्रिया सूत्रक्रिया सलिलवाद्यकम्। सूदशास्त्रपरिज्ञानं शारिकाशुकवादनम्॥
रसवादो वास्तुविद्या तक्षणं मेचिकोत्करः। सजीवनिर्जीवद्यूतशास्त्रसम्पाद्यपाटवम्॥
धोरणा मातृकायंत्रं मातृकाकाव्यलक्षणम्। आकर्षक्रीडितं च निमित्तागमवेदनम्॥
अग्न्यम्बुसेनादिस्तम्भो विषमप्रतिविषागमः। पांचालीनृत्तकरणं तण्डुलादिबलिक्रिया॥
प्रहेलिका दुर्वचकप्रतिमायादियोजनम्। मंत्रवादपरिज्ञानं विशीर्णाक्षरमुष्टिका॥

---

शब्द और अर्थ के सुन्दर सहभाव से होनेवाली विद्या का नाम साहित्य विद्या है। उपविद्याएं चौंसठ होती हैं। इन चौसठ उपविद्याओं का ही नाम कला है ऐसी पण्डित-समाज में प्रसिद्धि हैं। इनका कविको उपजीवन करना चाहिए। इस बात का औपनिषदिक अधिकरण में निरूपण करेंगे।

इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः ।
त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात् ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे

द्वितीयोऽध्यायः शास्त्रनिर्देशः ॥



---

सर्वाभिधानकोशोक्तिःपरकायप्रवेशनम् । जयश्यायामचित्रासिःपत्रिकाचित्रकर्तनम्॥
रत्नोत्पत्तिस्थानशास्त्रंदर्पणादिलिपिक्रिया । तिरस्करिण्याद्यावाप्तिःपुष्पशाटकिकागमः॥
हस्त्यश्वलक्षणज्ञानं तिर्यग्घृदयवेदनम् । परेंगितपरिज्ञानं जलयानागमज्ञता ॥
परचेतःप्रवेशश्चचतुः षष्टिरिमाःकलाः। अन्या उपकलाःप्रोक्तास्तासां संख्या चतुःशतम्॥
आभिरेव प्रपञ्चोऽयं वर्त्तते विजयी स्फुटम् ॥ इति ।

उपसंहरन्नाह—॥इतीति॥ । इत्येवमत्र लोकेऽभियुक्तानां पण्डितानाम् । संरम्भः कृतिः । तस्य विस्तरः । अनन्तो वर्त्तते । निपुणा कुशला धीर्येषां ते निपुणधियस्तेषां गम्यः, वैशद्येन सूक्ष्ममतिसंवेद्यः कृतिविस्तरः, निरूपणे ग्रन्थविस्ताराद्धेतोस्त्यक्तः । 'व्यासः संत्यक्तो ग्रन्थभीरुप्रियार्थमिति' पूर्वं प्रतिज्ञातत्वादुपेक्षितः । अयं भावः । ये कुशाग्रबुद्धयस्तैस्तु यत्र यत्रोल्लेखस्तत एव तद्विषयो ज्ञास्यते । ये पुनर्दुर्बुद्धयस्तेषां कृते कैमर्थक एवोल्लेखोऽपि, केवलं परतो ग्रन्थगौरवं पर्यवस्यति अतो यथाप्रयोजनं संक्षिप्य पूर्वं वर्णितो वर्णयिष्यते चेति ।

इति आहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ द्वितीयोऽध्यायः ।



---

उपसंहार करते हुए कहते हैं । इस तरह पण्डितों की रचना-शैली अत्यन्त विस्तृत है सूक्ष्ममति से वेद्य पदार्थ का विस्तार से निरूपण करेंगे तो ग्रन्थ बड़ा हो जायगा इसलिए किसी भी बात को विस्तारमें नहीं कहा है ।

इति बालक्रीडायां शास्त्रनिर्देशाख्यो द्वितीयोऽध्यायः ।



## तृतीयोऽध्यायः

# काव्यपुरुषोत्पत्तिः ३

एवं गुरुभ्यो गिरः पुण्याः पुराणीः शृणुमः स्म, यत्किल धिषणं शिष्या कथाप्रसङ्गं पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुः ? इति । स तान् बृहताम्पतिरूचे ।

---

चिरानुशीलनाद्यस्य मन्दाश्च गुरुतां गताः ।
साहित्यविद्यानुगतं वन्दे तं काव्यपूरुषम् ॥

अथ पूर्वाध्याये शास्त्रकाव्यभेदेन वाङ्मयस्य द्वैविध्यमुपवर्ण्य शास्त्रं तद्भेदाश्चोपदर्शिताः । इदानीं काव्यनिरूपणं परिशेषात्प्राप्तम् । तत्र काव्यनिरूपणप्रसङ्गे सिंहावलोकनवत् 'सारस्वतेयः काव्यपुरुष आसीत्' इत्युक्तं संस्मर्य तस्य सरस्वत्या उत्पत्तिप्रकारमाख्यातुमुपक्रमते । ॐकाव्येतिॐ । इयं प्रकरणसंगतिरपि दर्शिता । काव्यपुरुषोत्पत्तिः, काव्यपुरुषस्य काव्यप्रवर्त्तकस्य काव्यरूपस्य वा पुरुषस्य उत्पत्तिर्जन्म, उपवर्ण्यतेऽस्मिन्नध्याये । इति सूत्रार्थः ।

काव्यपुरुषस्योत्पत्तिविषयककथाप्रसङ्गं दर्शयति ॐएवमितिॐ । एवमित्थं कदाचित्कथाप्रसङ्गे पुण्याः पवित्राः । महापुरुषस्यावतारविशेषस्य जन्मप्रपञ्चिका इति पुण्यात्वनिर्देशो वाचाम् । पुराणीः प्राचीनाः । गिरो वाचः शृणुमःस्माश्रौष्म । यत् यथा । किलेति ऐतिह्ये । धिषणं बृहस्पतिं शिष्याः कथाप्रसङ्गे वार्त्तालापे यदा कदाचित्सादरं भवद्भिरुपवर्ण्यमानः सरस्वतीवरतनयो वो युष्माकमाचार्यो गुरुः काव्यपुरुषः कीदृशोऽस्ति इति एवं पप्रच्छुः पृष्टवन्तः । एवं पृष्टः स बृहतां पतिर्वाचां पतिः, 'बृहती वाक् तस्या एष पतिः' । इति छान्दोग्योपनिषत् ऊचे जगाद ।

---

ब्रह्माजी[1] के शिष्योंमें एक काव्यपुरुष भी था, यह पहले कह आये हैं । वह कौन है ? इसके उत्तर में काव्यपुरुष की उत्पत्ति कहने के लिए तृतीयाध्याय का आरम्भ करते हैं ।

ग्रन्थकार कहते हैं कि इस तरह प्राचीन एवं पवित्र वाणी सुनते हैं कि किसी प्रसंग में बृहस्पति के शिष्यों ने बृहस्पति से पूछा कि हे भगवन् ! आप कभी कभी जिसका वर्णन किया करते हैं वे आप के गुरु काव्यपुरुष कौन थे ? इस पर बृहस्पति कहने लगे कि सुनो

---

१. इस अध्याय का सम्पूर्ण विषय कवितावतार नामक पुस्तक से लिया गया है । विशेष जिज्ञासु उस पुस्तक को देखने का कष्ट करें ।

पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास। प्रीतेन मनसा तां विरिञ्चः प्रोवाच—'पुत्र ते सृजामि।' अथैषा काव्यपुरुषं सुषुवे। सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत्—

'यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्त्तते।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ॥'

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससम्भ्रममङ्क-

---

किमूच इत्याह-पुरेति। पुरा पूर्वस्मिन्काले पुत्रीयन्ती आत्मनः पुत्रमिच्छन्ती सरस्वती (सरतीति सरो ज्ञानम् तदस्यास्तीति सरस्वती) ज्ञानाधिष्ठात्री देवी तुषारस्य गिरिस्तस्मिन् हिमाद्रौ तपस्यामास तपश्चकार। प्रीतेन तपसा प्रसन्नेन मनसा तां सरस्वतीं विरञ्चो ब्रह्मा (विरञ्च विरिञ्च विरञ्चि विरिञ्चि—इति चत्वारोऽपि ब्रह्मपर्याया इति शब्दानुशासने'हेमचन्द्रः)। हे सरस्वति! ते त्वयि पुत्रं सृजामि, ते भक्त्या तुष्टोऽहं पुत्रकारणं बीजं निषिञ्चामि, गर्भमादधामीति भावः। अथ निषेकानन्तरमेषा पुत्रकामा सरस्वती काव्यपुरुषमेतन्नाम पुत्ररत्नं सुषुवे जनयामास। स जातमात्र एव, अभ्युत्थायाभ्युत्थानं कृत्वा। पादयोरुपग्रहेण सहितं चरणवन्दनपुरःसरम्। छन्दस्वतीं पद्यबद्धां वाचमुदचीचरत् अजीगदत्।

उच्चारिताया वाचः स्वरूपं निर्दिशति—यदेतदिति। हे अम्ब! यदेत त्पुरो दृश्यमानं विश्वमखिलं वाङ्मयं वाण्यास्ते स्वरूपं कर्तृ, अर्थमूर्त्या पदार्थस्वरूपेण विवर्त्तते समवायिकारणविलक्षणं कार्यमुत्पद्यते। सोऽस्मि विलक्षणकार्यरूपोऽहम्। अस्मीति अहमर्थकं विभक्तिप्रतिरूपकमव्ययम्। काव्यपुमान् काव्यपुरुषः तावकौ (तवैमौ तवकममकावेकवचन इति तवकादेशस्तस्येदमित्यण्) त्वदीयौ पादौ चरणौ वन्देय नमस्येय प्रणमेयं तव पादयोः पतामीति भावः।

आम्नायेषु वेदेषु पूर्वं दृष्टाम् इदानीं भाषाविषयेऽपि छन्दोबद्धां तां वाणीमुपलभ्य परिज्ञाय, देवी दिव्यस्वरूपा सरस्वती, सम्भ्रमेण सहितं सानन्दम्। अङ्क उत्संग

---

पहले किसी समय में पुत्र की इच्छा से सरस्वती ने हिमालयपर्वत पर तपस्या की। तपस्या से प्रसन्न होकर ब्रह्माजी ने उसको गर्भाधान कर दिया। इसके बाद उसने पुत्र काव्यपुरुष को पैदा किया। वह पैदा होते ही उठकर चरणवन्दना में श्लोक बोला—

'हे मातः! जो यह अखिल वाङ्मय अर्थरूप में दिखाई पड़ता है वह सब मैं हूँ। हे अम्ब! तुम्हारे चरणों की वन्दना करता हूँ।'

पहले जो श्लोकमय वाणी वेद ही में केवल मिला करती थी उस छन्दोबद्धा वाणी को आपस की बातचीत में उसके मुख से सुनकर सरस्वती बड़ी प्रसन्न हुई और उसको

पर्यङ्केनादाय तमुदलालयत्। 'वत्स! सच्छन्दस्काया गिरः प्रणेतः! वाङ्मयमातरमपि मातरं मां विजयसे। प्रशस्यतमं चेदमुदाहरन्ति यदुत 'पुत्रात्पराजयो द्वितीयं पुत्रजन्म' इति। त्वत्तः पूर्वं हि विद्वांसो गद्यं ददृशुर्न पद्यम्। त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति। अहो श्लाघनीयोऽसि। शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहु, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदार ओजस्वी चासि। उक्तिचणं ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लिकादिकं

---

एव पर्यङ्कस्तेन आदाय गृहीत्वोदलालयत् उपालालत्। 'वत्स! सच्छन्दस्कायाः पद्यरूपाया गिरः प्रणेतः! वाङ्मयमातरपि वाङ्मयजननीमपि। मातरं स्वजननीं मां पराभवसि मदपेक्षया उत्कर्षं भजस इति भावः। अत्यन्तप्रशस्तमिदम् आभाणकमुदाहरन्ति यदुत पुत्रात्, 'पुन्नाम्नो नरकात्त्रायतेऽसौ पुत्रः' तस्मात् सूनोरपेक्षया अपकर्षः पराभवः द्वितीयं पुत्रस्य जन्म। पुत्रस्योत्कर्षे द्वितीयपुत्रोपलब्धिरिति भावः। इत्युदलालयदिति पूर्वेण सम्बन्धः।

एवमुल्लाप्य तस्मा आशीर्वदति—वत्स इति। त्वत्तो युष्मत् पूर्वं प्रथमे विद्वांसो विचक्षणाः गद्यम् अनिबद्धं काव्यं ददृशुः। न पद्यं श्लोकं ददृशुरिति योगः। त्वदुपज्ञं त्वया प्रथमं ज्ञातम्। 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः। उपज्ञोपक्रमं तदाद्याचिख्यासायामिति समासः। इदं छन्दस्वद्वचः। अथातः त्वदुत्तरं लोके, प्रवर्त्स्यति अहो इति सम्बोधने। अहो पुत्र! श्लाघनीयोऽसि शब्दार्थौ ते शरीरमस्तीति शेषः। गीर्वाणी ते मुखम्। प्राकृतं बाहुः। अपभ्रंशो जघनं सक्थि। पैशाचं पादौ। मिश्रमुरः। संस्कृतादिमेभ्यान्ता इमाः सर्वा भाषाः काव्यपुरुषस्याङ्गप्रत्यङ्गानि। तदुक्तम्—

संस्कृतं प्राकृतं मिश्रं विकृतं भूतभाषितम्।
काव्यस्याङ्गत्वमायान्ति भाषाश्चैताः पृथक् पृथक्॥ इति।

एवं यथावसरं सम उदासीनेषु, प्रसन्नो मित्रेषु, मधुरः कथाप्रसङ्गेषु, उदारो ऽर्थिषु,

---

गोदी में लेकर लालन करने लगी—हे वत्स! हे श्लोकमय वाणी को बनाने वाले! वाङ्मय की माता मुझको भी तुमने जीत लिया। यह एक बड़ी अच्छी सुन्दर कहावत है कि पुत्र से पराजित होना मानो दूसरा पुत्रजन्म होता है। तुमसे पहले के विद्वानों ने गद्य ही को देखा था—पद्य को नहीं। अब सबसे पहले तुमसे ही श्लोकरूप वाणी संसार में प्रचलित होगी। अहो! तुम बहुत प्रशंसनीय हो। शब्दार्थ तुम्हारे शरीर हैं, संस्कृत मुख है, प्राकृत बाहु है, अपभ्रंश जघन है, पैशाची भाषा पाद है, मिश्रभाषा तुम्हारा वक्षःस्थल है; समता, प्रसन्नता, माधुर्य, औदार्य और ओज

च वाक्केलिः, अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति। भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिस्तौति—

'चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य।

---

ओजस्वी शत्रुषु चासि भविष्यसि। उक्तिचणं वक्रोक्तिरूपमिति यावत्। ते वचः, ते वाक्यं वक्रोक्तिरलंकार इति भावः। रस आत्मा अर्थात् आत्मस्थानीयः। छन्दांसि वृत्तानि रोमाणि रोमस्थानीयानि। प्रश्नोत्तरेति। प्रश्नोत्तरं च प्रवह्लिका चेति प्रश्नोत्तरप्रवह्लिके। 'प्रवह्लिका प्रहेलिका' इत्यमरः। इमे शब्दालंकृती। तदुक्तम्—

चित्रवक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाः।
प्रश्नोत्तरं च यमकमष्टालङ्कृतयो ध्वनौ॥ इति।

ध्वनतीति व्युत्पत्त्या ध्वनौ शब्दे। तत्र प्रश्नोत्तरं बहिरन्तर्भेदेन द्विविधम्। इदमेव बहिर्लापिकान्तर्लापिकाभ्यां व्यवह्रियते। उदाहरणं सुभाषितेषु विततं तत्रैव द्रष्टव्यम्। प्रहेलिका सकूटप्रश्नः। सा च षोढा। तदुक्तम्—

प्रहेलिका सकूटप्रश्नः सा च षोढा च्युताक्षरा।

कैश्चित्तु प्रहेलिकानां षोडश भिदाः दर्शिताः। दुष्टप्रहेलिकाश्च चतुर्दश। तदुक्तम्

एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः।
दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश॥ इति।

उदाहरणं सुभाषितेषु विततं द्रष्टव्यम्। ते आदिर्यस्येति तत्। प्रश्नोत्तरप्रवह्लिकादिकं वाचां केलिः वाक्केलिः। अनुप्रासश्चोपमा चेति, अनुप्रासोपमे। ते आदिर्येषां तेऽनुप्रासोपमादयोऽलंकारास्त्वामलङ्कुर्वन्ति, अलङ्करिष्यन्ति। अलंकारास्ते कटककुण्डलस्थानीया भविष्यन्ति इति भावः। अत्र 'वर्त्तमानसामीप्ये वर्त्तमानद्वे'ति भविष्यदर्थे वर्त्तमानप्रयोगः।

नायं वृत्तान्त इदानीमेव प्रतीयते किन्तु भगवत्या श्रुत्या पूर्वमेव वचनभङ्ग्या प्रतिपादित इति प्रस्तौति—*भविष्येति। भाविनं पदार्थजातमभिदधती श्रुतिरपि प्रस्तावमारचयति। श्रुतिस्वरूपं दर्शयति—*चत्वारीति*। अत्र गौणीलक्षणया उपमया चान्वयोपपत्तिः। तेनायमर्थः—चतुःसंख्योपलक्षिता वृत्तयः प्रवृत्तयश्च क्रमश

---

तुम्हारे गुण हैं, रस तुम्हारी आत्मा है, छन्द रोम हैं, प्रश्नोत्तरादि वाक्क्रीडा है, अनुप्रास, उपमा प्रभृति अलंकार तुमको सुशोभित करेंगे। भविष्य की सूचना करने वाली श्रुति भी तुम्हारी स्तुति करती है। जैसे:—

चार-चार संख्या वाली वृत्ति और प्रवृत्तियाँ जिसके शृङ्ग की तरह हैं, अभिधा-

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश ॥'

'तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचित चेष्टस्व' इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातुमभ्रगङ्गां जगाम ।

---

उभे शृङ्गे इव । अयं भावः—शब्दार्थौ शरीरमित्युक्तम् । तत्र यथा वेषभाषाचारैरयं गौडो मैथिलो दाक्षिणात्य आङ्गल इत्यादातत: शृङ्गग्राहिकतयाऽनुसन्धीयते तथैव श्रुति-प्रवृत्तिभ्यां काव्यगतः शब्दोऽर्थश्च । तथाहि । आर्द्रार्द्रेत्यनेन गौडमहिलारूपोऽर्थः, नाट-क्रेत्यत्र महोदयमहेलारूपोऽर्थः परिचीयते । तादृग्वेषस्तासामेवेति । एवं समासबा-हुल्ये गौडीयः, तद्धितबाहुल्ये दाक्षिणात्यः पाठोऽनुमीयते । यतो वल्लभसमासवृत्तयो गौडाः, प्रियतद्धिता दाक्षिणात्याः इति स्वभावपरिस्थितेर्वक्ष्यमाणत्वात् । त्रयोऽस्य पादाः । अभिधालक्षणाव्यञ्जनाशक्तयः पादा इव । यथा पादाः शरीरिणं सह कुर्वन्ति तथा शक्तयोऽपि पदजन्यपदार्थोपस्थितौ सहकारिण्यः । तदुक्तम्—'वृत्तिर्धीः सह-कारिणी' । इति । द्वे शीर्षे । द्वौ प्रकृतिप्रत्ययौ द्वे शिरसी इव । यथा अवयवेषु शिरः प्रधानं तथा काव्यस्यापि तौ शब्दार्थशरीरकाव्यस्य तावेव शीर्षे भवितुं शक्नुतः । सप्तहस्तासोऽस्य । आजसेरसुक् । नामाख्यातोपसर्गनिपातकर्मप्रवचनीयगत्यव्ययानि सप्त हस्ता इव । तादृशकार्यकारित्वात् । त्रिधा बद्धः । माधुर्यादिगुणत्रयविशिष्टपद-रचनात्मिकाभिस्तिसृभी रीतिभिः क्वचित्पद्यप्रकारेण कुत्रचिद् गद्यप्रकारेण कुहचिच्च उभयथा बद्धो रचितः ( काव्यपुमान् ) यशःप्रभृतिकामान् वर्षतीति वृषभः । महो देव । महादेवः काव्याधिष्ठाता । मर्त्यानाविवेश । मर्त्येषु प्रादुर्बभूव ।

यद्यपि श्रुत्यादिभिरयमर्थो ज्ञातप्रायः, यदुत काव्यस्य तद्विद्यायाश्च प्रवर्त्तनार्थं कश्चन देवांशभूतो महापुरुषोऽवतरिष्यति । एवं च त्वं महापुरुषोऽसि । तथापि प्रग-ल्भस्य धृष्टस्य पुंसः कर्म चेष्टां संवृणु अवरुन्धि । बालोचितं बालस्वभावसुलभं चेष्टस्व । येन चिरात्तिरपत्यत्वेन निर्विण्णाया मम निरतिशयितानन्दधारा प्रवहतु, इत्येवमेनमुपदिश्य, अनोकहमाश्रयते तस्मिन् । भूरुहसमाश्रयणशीतल इत्यर्थः । गण्डशैलस्य च्युतस्थूलोपलस्य तलमेव तल्पं तस्मिन् । 'गण्डशैलास्तु, च्युताः स्थूलो-पला गिरेः' 'तल्पं शय्याट्टदारेषु' इति चामरः । निवेश्य शाययित्वा स्नातुं स्नानार्थम्

---

लक्षणा वगैरह तीन वृत्तियाँ जिसके पाद सदृश हैं । प्रकृति और प्रत्यय जिसके शिर तुल्य हैं; नाम, आख्यात, उपसर्ग, निपात, कर्मप्रवचनीय, गति और अव्यय जिसके सात हाथों के समान हैं, जो तीन तरह से—गद्य, पद्य और मिश्रित रूप से—बँधा हुआ है । ऐसा सम्पूर्ण कामों की वृष्टि करने वाला शब्दकर्मा महान् देव मर्त्यों में आविर्भूत होगा ।

इस तरह यद्यपि तुम महापुरुष हो तथापि बालस्वभावसुलभ चेष्टाओं को करो—धृष्टपुरुष का सा आचरण मत करो । ऐसा कह कर वृक्ष की छाया में किसी शिलाखण्ड

तावच्च कुशान् समिधश्च समाहर्त्तुं निःसृतो महामुनिरुशनाः परिवृत्ते पूषण्यूष्मोपप्लुतं तमद्राक्षीत्। कस्यायमनाथो बाल इति चिन्तयन्स्वमाश्रमपदमनैषीत्। क्षणादाश्वस्तश्च स सारस्वतेयस्तस्मै छन्दस्वतीं वाचं समचारयत्। अकस्माद्विस्मापयन्स चाभ्युवाच—

'या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम्।
हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती॥' इति।

---

अभ्रगङ्गामाकाशगङ्गां जगाम। 'तावच्छब्दस्तदेत्यर्थकः' इति शब्दार्थरत्नावली। यावत् सा स्नातुं गता तावच्च तदैव तस्मिन्नेव क्षणे कुशान्दर्भान् समिधश्च समाहर्त्तुमाचेतुं बहिर्निःसृतो महामुनिरुशनाः शुक्रः। पूषणि सूर्ये परिवृत्ते उदयाचलात्किंचिद् दूरङ्गते सति ऊष्मणा घर्मेण उपप्लुतमभितप्तं तमद्राक्षीत् अपश्यत्। दर्शनोत्तरं कस्यायमनाथोऽरक्षितो बालः शिशुरित्येवं चिन्तयन्ध्यायन् स्वस्याश्रमस्तस्य पदं स्थानं 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। अनैषीत् प्रापयत्। शैत्यादिप्राप्त्या क्षणात् मुहूर्त्तेनैवाश्वस्तः सुखितः स सारस्वतेयः (स्त्रीभ्यो ढक्) सरस्वतीपुत्रः। तस्मा उशनसे छन्दस्वतीं वाणीं समचारयत् समजिज्ञपत्। सर्वे गत्यर्था धातवो ज्ञानार्थाः। इति सिद्धान्तात्। तस्मा आशीर्वादमदात् त्वामपि छन्दस्वद्वाणी उपतिष्ठतादिति भावः। सोऽप्यर्थे! सोपि तथोपदिष्टोपि विस्मापयन्नाश्चर्यं प्रापयन्, अकस्मादित्युवाच।

ॐयेतिॐ या सूक्तिधेनुः सूक्तिरूपिणी कामधेनुः कवय एव दोग्धारः दोहकर्त्तारः तैरन्वहं प्रत्यहं दुग्धापि न दुग्धेव। ईषदर्थोऽत्र इव शब्दः। तेनेषदपि न दुग्धा इत्यर्थः। सा सूक्तिरूपिणी कामधेनुः सोऽस्माकं हृदि सन्निधत्ताम्। अस्माकं हृदयस्थले संचारं कृत्वा, सकलान्पदार्थान् प्रसुताम् प्रादुर्भावयतादिति भावः।

तत छन्दस्वद्वचोदर्शनं पूर्वं यस्य सुमेधस्स्वस्यादस्तत्पूर्वकं पूर्वोक्तैतच्छन्दस्वद्व-

---

पर काव्यपुरुष को बैठाकर स्नान के लिए आकाशगंगा की तरफ गई। उस समय कुश और समिधाओं को लेने के लिए आये हुए महामुनि भार्गव ने धूप में तड़पते हुए उसको देखा। यह अनाथ बालक किसका है ऐसा चिन्तन करते हुए अपने आश्रम में ले आये। शीतोपचार से क्षण भर में आश्वस्त हुए उसने मुनि को 'छन्दोबद्धा वाणी का ज्ञान तुमको हो' यह आशीर्वाद दिया। इसके बाद आश्चर्यान्वित करते हुए भार्गव बोले :—

निरन्तर दोहन करते रहने पर भी कविदोग्धा जिसका दोहन नहीं कर सके वह सूक्ति विकाश कामधेनु हमारे हृदय में सन्निहित हो।

तत्पूर्वकमध्येतृणां च सुमेधस्त्वमादिदेश। ततः प्रभृतिमुशनसं सन्तः कविरित्याचक्षते। तदुपचाराच्च कवय इति लोकयात्रा। कविशब्दश्च 'कवृ-वर्णने' इत्यस्य धातोः काव्यकर्मणो रूपम्। काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुञ्जते। ततश्च विनिवृत्ता वाग्देवी तत्र पुत्रम-

---

चोदर्शनपूर्वकमित्यर्थः। एतच्छन्दस्वद्वचसः अध्येतॄणां पाठकानां सुमेधस्त्वं च धारणावद्धीत्वं च। 'धीर्धारणावती मेधा' इत्यमरः। अथवा चोप्यर्थः। ततोऽध्येतॄणामपि सुमेधस्त्वम्, आदिदेश अनुशशास। यः पूर्वमेतत्पद्यमध्येष्यते स सुमेधाः सम्पत्स्यत इति भावः।

उशनसि कविशब्दप्रवृत्तिनिमित्तं दर्शयति-*तत इति*। ततः प्रभृति श्लोकोच्चारणादारभ्य सन्तो विद्वांसस्तमुशनसं शुक्रं कविरित्याचते समाख्यान्ति। उपचारो लक्षणा। लोकयात्रा लोकस्थितिः। तादृशच्छन्दस्वद्वचसो दर्शकेषु वर्णयितृषु च कविरिति व्यवहाराद् लोकेऽपि कवयः कवय इति व्यवहरन्ति। इति भावः। तदुक्तम्—

नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥

प्रसङ्गागतं कविशब्दं निर्वक्ति *कवीति*। कवीतिशब्दः 'कवृ-वर्णे' इति काव्यं कर्म क्रिया यस्य तस्य धातोः रूपम्। तेन हि कवते सर्वं जानाति, सर्वं वर्णयति, सर्वं ( सर्वतो ) गच्छति प्राप्नोति, इति कविः।

नन्वेवं कवेः कर्म काव्यमिति पर्यवसन्नम्, तथा च काव्यपुरुष इत्यत्र कः समासोऽभ्युपेयताम् काव्यस्य पुरुष उत काव्याधिष्ठाता पुरुषः इति संदिहानमुत्तरयति—*काव्येति*—काव्यैकरूपत्वात् काव्यमिश्रत्वात् सरस्वतीपुत्रेऽपि काव्यपुरुष इति भक्त्या भज्यते सेव्यते मुख्यार्थोऽनयेति भक्तिर्लक्षणा। तया प्रयुञ्जते व्यपदिशन्ति।

एवं प्रसक्तानुप्रसक्तं प्रदर्श्य पूर्वानुस्यूतं व्याघुट्य दर्शयति—*तत इति*।

---

महामुनि भार्गव को इस श्लोक दर्शन के साथ-साथ 'जो इसको पढ़ेगा वह बुद्धिमान् हो जायगा' यह आशीर्वाद दिया। उसी दिन से विद्वान् लोग उसको कवि कहने लगे। फिर तो जो ऐसी रचना करने लगा उसी को औपचारिक प्रयोग से कवि कहने लगे।

'कवृ वर्णे' धातु से कवि शब्द बना है, जिसका कर्म काव्य है। यह सरस्वती का पुत्र भी काव्यरूप है इसलिए उसको भी लक्षणा से काव्यपुरुष कहते हैं।

स्नान करने के बाद लौटकर जब पुत्र को अपने स्थान पर नहीं पाया तब सरस्वती रोने लगी। उसी समय किसी कार्यवश आये हुए महामुनि वाल्मीकि ने काव्यपुरुष

पश्यन्ती मध्येहृदयं चक्रन्द। प्रसङ्गागतश्च वाल्मीकिर्मुनिवृषा सप्रश्रयं तनुदन्तमुदाहृत्य भगवत्यै भृगुसूतेराश्रमपदमदर्शयत्। सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि च चुम्बन्ती स्वस्तिमता चेतसा प्राचेतसायापि महर्षये निभृतं सच्छन्दांसि वचांसि प्रायच्छत्। अनुप्रेषितश्च स तया निषादनिहतसहचरीं क्रौञ्चयुवतिं करुणक्रेङ्कारया गिरा क्रन्दतीमुदीक्ष्य शोकवान् श्लोकमुज्जगाद—

---

ततोऽभ्रगङ्गास्नानात् विनिवृत्ता प्रत्यावृत्ता। तत्र अनोकहाश्रयिणि गण्डे शैलतलतल्पे। *मध्येति*। हृदयस्य मध्ये। पारे मध्ये षष्ठ्या वेति समासः।

प्रसङ्गेति—किमितिकारणाद्धेतोः समागतः। मुनीति। मुनिवृषा मुनीन्द्रः 'इन्द्रो मरुत्वान्मघवा वासवो वृत्रहा वृषा' इत्यमरः। वाल्मीकिरिति। वल्मीकप्रभवः। प्रश्रयेण सहितं सविनयम्। तमौशनसमुदन्तं वृत्तमुदाहृत्य कथयित्वा भगवत्यै सरस्वत्यै भृगुसूतेः भार्गवस्योशनसः, 'उशना भार्गवः कविः' इत्यमरः। आश्रमस्य वसतेः पदं स्थानमदर्शयत् दर्शयामास सापि श्रुतपुत्रवृत्तान्ताऽपि प्रस्नुतौ स्नेहात्प्रस्कन्नौ पयोधरौ स्तनौ यस्याः सा पुत्राय काव्यपुरुषाय। अङ्कस्य पाली इव अङ्कपाली ताम्। आलिङ्गनं ददाना कुर्वती शिरसि च मूर्ध्नि च चुम्बन्ती आघ्रान्ती। स्वस्तिमता कल्याणयुक्तेन चेतसा हृदयेन प्राचेतसायापि वाल्मीकये महर्षये निभृतमेकान्ते। छन्दांसि छन्दस्वन्ति वचांसि वाक्यानि प्रायच्छत् अदात्। दत्वा तया देव्याऽनुप्रेषितो विसर्जितश्च। स ऋषिः निषादेन व्याधेन निहतः सहचरो यस्याः सा निषादनिहतसहचरी तां क्रौञ्चयुवतिं क्रौञ्चतरुणीं करुणो दीनः क्रेङ्कारः क्रोशनं यस्याः सा तया करुणक्रेङ्कारया वाण्या क्रन्दन्तीं रुदतीमुदीक्ष्य दयार्द्रहृदयतया शोकवान् श्लोकं पद्यम्। 'पद्ये यशसि च श्लोकः' इत्यमरः। उज्जगाद प्रोच्चचार।

---

का सब वृत्तान्त और भार्गव का आश्रम दिखला दिया। वहाँ पर पुत्र को देखकर बहुत प्रसन्न हुई और प्रसन्नता के कारण उसके स्तन चूने लगे। इसके बाद पुत्र को गोदी में लेकर चुम्बन करती हुई देवी ने कल्याणमय चित्त से मुनि को आशीर्वाद दिया कि तुम भी छन्दोबद्ध वाणी के निर्माता बनो और उसको भेज दिया। मुनि ने आगे जाकर देखा कि किसी व्याध ने क्रौञ्च पक्षियों के जोड़े में से किसी एक क्रौञ्च को मार दिया और क्रौञ्ची विलाप कर रही है। उसका करुण विलाप सुनकर अकस्मात् ऋषि के मुख से यह श्लोक निकल पड़ाः—

'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥'

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात्, यदुतान्यदनधीयानो यः प्रथममेतमध्येष्यते स सारस्वतः कविः संपत्स्यत इति ।

---

—मा निषादेति॥—इदं रामायणीयं पद्यम् ।

नारदात्स्वगुणश्रवणानन्तरं मुनेः स्ववर्णनेच्छां ज्ञात्वा स्वचरित्रस्य च करुणरसमयत्वेन तत्प्रधानकाव्येऽतिकरुणचित्तस्यैवाधिकारात् ऋषेः करुणचित्तत्वजिज्ञासयेव पूर्वं भृगुदत्तशापस्य पुनरुक्तावकरणेन दार्ढ्यसम्पादनाय मुनेरीक्षणाय च भगवान् राम एव निषादरूपेण पश्यतो मुनेः पुरतस्तमनाहत्य क्रौञ्चं रचोविशेषं जघान । ततस्तदिच्छावशादन्तर्यामितया तथा प्रेरणाच्च यदयं कामोपहतपक्षिणमवधीत् तदेष महानधर्मोऽनेन कृत इति संजातकरुणत्वात् परिपूर्णकुम्भोच्छलनवच्चित्तवृत्तेस्तस्य शोक एवाकृतकतया इव आवेशवशात् समुचितच्छन्दोवृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः । हे निषाद ! यद्यस्मात्त्वं कामेन मोहितं मुग्धं क्रौञ्चयोर्मिथुनं तस्मात् मिथुनीभूतात् क्रौञ्चयुगात् विभक्तमेकं पुरुषं क्रौञ्चमवधीः हतवान् । तस्मात्त्वमपि शाश्वतीनिरन्तराः समा वर्षाणि आयुःशेषभूतानि वर्षाणि यावत् । प्रतिष्ठां स्वस्त्रीसाहित्येन स्थितिम् ।

इह लोके माऽगमः माप्नुहि । अगम इत्यत्र माङ्योगेऽप्यडागमस्त्वार्षः । अयं भावः—सहचरविरहक्रौञ्च्याक्रन्दश्रवणशोकाप्लुतो मुनी रुषा 'यदेकमवधीरतो यथा त्वयायं स्त्रीविरहितः कृतः सा च नायकहीना कृता तथा त्वमपि प्रियया स्वभार्यया हीनो भव सा च त्वया हीना भवतु' इति शशाप ।

ततः श्लोकोक्तेरुत्तरं दिव्या दृष्टिर्यस्याः सा देवी तस्मै वाल्मीकिमुखोद्गतश्लोकाय । 'यः कोपि द्विजः । यदुत यदि अन्यत् किमपि वर्णान्तरम् । अनधीयानोऽपठन् । एनं श्लोकं प्रथमं प्रागध्येष्यते तर्हि स सारस्वतः सरस्वतीप्राप्तवरप्रसादः कविः सम्पत्स्यते काव्यकर्त्ता भविष्यति' इत्येवं परमाशिषमदात् ।

---

हे निषाद ! हे व्याध ! तुमने जो इस जोड़े में से एक काममोहित क्रौञ्च की हत्या की इससे तुम भी इस लोक में आयु के शेष वर्षों में अपनी स्त्री के सहित निरन्तर सुखपूर्वक नहीं रह सकोगे ।

उसके बाद दिव्य दृष्टि देवी ने वाल्मीकिप्रोक्त श्लोक को आशीर्वाद दिया कि जो मनुष्य और कुछ भी नहीं पढ़कर सबसे पहले इसको पढ़ेगा वह सारस्वत कवि हो

स तु महामुनिः प्रवृत्तवचनो रामायणमितिहासं समदृभत्; द्वैपायनस्तु श्लोकप्रथमाध्यायी तत्प्रभावेण शतसाहस्रीं संहितां भारतम्।

एकदा तु ब्रह्मर्षिवृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान्देवः स्वयम्भूस्तामिमां निर्णेत्रीमुद्दिदेश। उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज। वत्स ! परमेष्ठिनाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठान्न्यवर्तयदेनमात्मना तु प्रववृते। ततः स काव्यपुरुषो रुषा निश्चक्राम। प्रियं मित्रमस्य च कुमारः साक्रन्दं रुदन्नभ्यधीयत गौर्या

---

अथ श्लोकप्रभावं दर्शयति—॥स इति॥ स तादृशश्लोकोद्गाता महामुनिर्वाल्मीकिः प्रवृत्तं वचनं यस्यासौ पद्यनिर्माणविषये प्रवृद्धभारतीकः सन् रामायणमितिहासमितिवृत्तं समदृभत् अग्रन्थीत्। श्लोकं प्रथममधीतेऽसौ श्लोकप्रथमाध्यायी द्वैपायनो व्यासोपि। तुरप्यर्थे। तस्य श्लोकप्रथमाध्ययनस्य प्रभावेणानुभावेन शतं सहस्राणां यस्यां सा शतसाहस्री ताम्, एकलक्षसंख्यापरिच्छिन्नां संहितां भारतं समदृभत् इति पूर्वेण सम्बन्धः।

अनन्तरितं वृत्तं व्याकुट्य दर्शयिष्यमाणः साहित्यविद्यावधूकाव्यपुरुषयोर्विवाहबीजं प्रस्तौति-*एकदेति*। एकदा कदाचित् ब्रह्मर्षिश्च वृन्दारकश्चेति ब्रह्मर्षिवृन्दारकौ तयोः श्रुतौ वेदविषये विवादे कलहे प्रवृत्ते दाक्षिण्यवान् चतुरो देवः स्वयम्भूर्ब्रह्मा तामिमां सरस्वतीं निर्णेत्रीमुद्दिदेश माध्यस्थ्यं सम्पादयितुं सन्दिदेश। उपश्रुतो वृत्तान्तोऽनेनासौ श्रुतवार्त्तः सोपि। चोऽप्यर्थे। व्रजन्तीं ब्रह्मलोके गच्छन्तीं मातरं जननीमनुवव्राजानुजगाम। अनुगच्छन्तमेनं हे वत्स! ब्रह्मणाऽननुमोदितस्य ते ब्रह्मलोकयात्रा तल्लोकगमनं न निःश्रेयसाय कल्याणाय, इत्येवमभिवदन्ती हठान्न्यवर्त्तयन्न्यवारयत्। किन्तु स्वयं प्रववृते जगाम। ततः निवर्तनस्य गमनात् स काव्यपुरुषो रुषा क्रोधेन निश्चक्राम निर्जगाम। एवं गते तस्मिन् अस्य काव्यपुरुषस्य प्रियं मित्रं सुहृद् कुमारः कार्त्तिकेयः साक्रन्दं सफूत्कारं रुदन् गौर्या पार्वत्याऽभ्यधीयता-

---

जायगा। उसी के प्रभाव से उस मुनिने रामायण इतिहास बनाया। और पहले पहल इसी श्लोक को पढ़ने वाले व्यास जी ने एकलक्ष श्लोकों में महाभारत बनाया।

एक दिन ऋषि और देवताओं का श्रुति के विषय में विवाद हो गया। ब्रह्माजी ने सरस्वती को विवाद में मध्यस्थ बनने के लिए बुलाया। काव्य पुरुष ने जब यह वृत्त सुना तब वह भी माता के साथ चल पड़ा। सरस्वती ने कहा—हे वत्स ! बिना बुलाये जाना तुम्हारे लिए कल्याणकर नहीं होगा इसलिए तुम मत चलो। उसको लौटा कर स्वयं चली गई। इससे काव्य पुरुष रुष्ट होकर निकल पड़ा। उसके चले जाने से उसका प्रियमित्र

तात ! तूष्णीमास्स्व साऽहमेषा निषेधामीति निगदन्ती समचिन्तयत् । प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति, तदेतस्य वशीकरणं काम‍पि स्त्रियं सृजामीति विचिन्तयन्ती साहित्यविद्यावधूमुदपादयदादिशच्चैनामेष ते रुषा धर्मपतिः पुरः प्रतिष्ठते तदनुवर्त्तस्वैनं निवर्त्तय च । भवन्तोऽपि हन्त ! मुनयः ! काव्यविद्यास्नातकाश्चरितमेतयोः स्तुध्वमेतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती भवानी जोषमासिष्ट । तेऽपि तथा कर्त्तुमवतस्थिरे ।

---

गादि । तात ! प्रियपुत्र ! तूष्णीं जोषमास्व तिष्ठ साहमेषा इदानीमेवाह·निवारयामी'त्येव निगदन्ती ब्रुवन्ती समचिन्तयत, अध्यासीत चिन्तितं प्रकाशयति— प्राय इति । प्रायः प्राणभृतां सजीवानां प्रेमाणमन्तरेण स्नेहं विना नान्यद्बन्धनमविरोधकमस्ति । अयमेवार्थो भङ्ग्यन्तरेणोक्तमन्यत्र—यथा—

बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोशे । इति ।

तदिति—तस्मादेतस्य काव्यपुरुषस्य वशीकरणं कामपि विलक्षणसौन्दर्यशालिनीं स्त्रियं रमणीं सृजामीत्येव ध्यायन्ती । साहित्यविद्या शब्दार्थयोः सहभावेन विद्या सैव वधूरिति साहित्यविद्यावधूः । तामुदपादयत असृजत । एनां वधूमादिशदाज्ञापयच्च ।

किमादिशदित्याह—एष त इति—'एष गच्छन्नयं ते धर्मपतिः, रुषा पुरोऽग्रेप्रतिष्ठते तत्तस्मादेनमनुवर्तस्व, निवर्तय च । हन्त हे भवन्तो ! मुनयः! यूयमपि एतयोर्वधूवरयोश्चरितं स्तुध्वम् नुवथ । एतत्स्तवनं वो युष्माकं काव्यसर्वस्वं भविष्यति' इत्येवमभिधाय भवानी पार्वती जोषम् तूष्णीमासिष्ट तस्थौ । ते मुनयो वधूश्च सव तथा कर्तुमनुगन्तुं निवर्त्तयितुं स्तोतुं च अवतस्थिरे व्यवसिष्यिरे ।

---

स्वामी कार्तिकेय फूट २ कर रोने लगा । तब गौरी ने कहा—तात ! मत रोओ मैं अभी इसको लौटाती हूँ । ऐसा कहकर इसके लौटाने की चिन्ता करने लगी । प्रायः देखा गया है कि प्राणियों का प्रेम के सिवाय और कोई बन्धन नहीं होता है । इसलिए इसको वशीभूत करने के लिए किसी स्त्री को पैदा करना चाहिए । ऐसा विचार करके साहित्य विद्यावधू को पैदा किया और उसको आदेश दिया कि यह तुम्हारा धर्मपति क्रोधसे भगा जा रहा है इसका अनुवर्त्तन करो लौटाओ और हे मुनियो ! आप लोग भी इनके चरित का वर्णन करें । यह आप लोगों का काव्यसर्वस्व होगा । ऐसा कहकर भगवती भवानी ने विराम किया और वे मुनि भी वैसा ही करने लगे ।

अथ सर्वेप्रथमं प्राचीं दिशं शिश्रियुर्यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः, तत्राभियुञ्जाना तमौमेयो यं वेषं यथेष्टमसेविष्ट, स तत्रत्याभिः स्त्रीभिरन्वक्रियत। सा प्रवृत्तिरौड्रमागधी। तां ते मुनयोऽभितुष्टुवुः—

'आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः।

---

भगवान् काव्यपुरुषो रुष्टः सन् चतुर्षु दिक्षु बभ्राम, तमनुप्रसादयितुं वधुर्मनयश्च जग्मुः। तत्र वधूवराभ्यां 'ब्राह्मणवसिष्ठ'-न्यायेन विभिन्नाभ्यां काव्यसाहित्याभ्याम् यत्र यत्र देशे यो यो वेषः सेव्यते स्म तत्रत्यानां स्त्रीपुरुषाणां स स वेषः समजनि। तदेव वेषप्रवर्त्तनं प्रवृत्तिशब्दभाग्। यच्च तया नृत्तवाद्यविलासादिकमनुवृत्यते सैव वृत्तिः। या तेन तदनुरक्तेनानुरक्तेन च वाग्भङ्गी अनुशीलिता सैव रीतिः। एवं तयोश्चतुर्दिक्षु वेषभाषादीनां मध्ये चतुष्प्रकारत्वात् वृत्तिप्रवृत्तीनां चातुर्विध्यं रीतीनां पुनस्त्रैविध्यमेव। एषां लक्षणादिकमग्रे वक्ष्यते। तत्र कुत्र, कथं का, प्रवृत्तिः, वृत्तिः, रीतिः, समुत्पन्नेति तत्प्रकारो निर्दिश्यते दिगनुसारेण। तत्र पूर्वं प्राच्या दिशः ❀अथेति❀ अथ भवान्या आज्ञानन्तरं सर्वे ते प्रथमं प्राक् प्राचीं दिशं शिश्रियुः श्रितवन्तः। यत्र प्राच्याम् अङ्गवङ्गसुह्मब्रह्मपुण्ड्रप्रभृतयो जनपदाः सन्ति। तत्र तेषु जनपदेषु तं काव्यपुरुषमभियुञ्जाना अभियोक्तुमीहमाना औमेयी (उमाया अपत्यं औमेयी—स्त्रीभ्यो ढक्। ढस्य एय्। टिड्ढाणञिति ङीपि) साहित्यविद्यावधूः यथेष्टं यदृच्छया यं वेषं नेपथ्यमसेविष्ट। स वेषः तत्रत्याभिः तद्दिग्भवाभिः स्त्रीभिरन्वक्रियत। सा प्रवृत्तिः वेषानुकरणम्, औड्रमागधी। तदुक्तम्—

अङ्गवङ्गकलिङ्गाश्च वत्साश्चैवौड्रमागधाः। इति।
अन्येपि देशाः प्राच्यां ये पुराणे संप्रकीर्त्तिताः॥
तेषु प्रयुज्यते ह्येषा प्रवृत्तिश्चौड्रमागधी इति।

तां प्रवृत्तिं मुनयोऽभितुष्टुवुः नुनुवुः। आर्द्रार्द्रेति। आर्द्रार्द्रमत्यार्द्रं चन्दनं ययोरेवंभूतयोः कुचयोरर्पितो धारितः। सूत्रणं सूत्रं ग्रथनम्। 'सूत्रग्रथन' इत्यस्मात्

---

इसके बाद वे सब पहले प्राची दिशा में गए। जिस दिशा में अङ्ग, वङ्ग, सुह्म, ब्रह्म-पुण्ड्र प्रभृति जनपद हैं, वहाँ पर उसके साथ सम्बन्ध करने के लिए उमापुत्री ने जिन वेष को स्वेच्छा से सेवन किया उस वेष का उस देश की स्त्रियों ने अनुकरण किया। वह अनुकरण-प्रवृत्ति औडमागधी नाम से प्रसिद्ध हुई। उस प्रवृत्ति की उन मुनियों ने स्तुति की :—

जिसमें चन्दन से अत्यन्त आर्द्र कुचों पर सूत्र से गुँथा हुआ मुक्ताहार पहन लिया गया है, और वस्त्र जहां सीमन्त को सुशोभित कर रहा है, और बाहुमूल जिसमें स्फुट

दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद् गौडाङ्गनासु चिरमेष चकास्तु वेषः ॥'

यदृच्छयाऽपि यादृङ्नेपथ्यः स सारस्वतेय आसीत तद्वेषाश्च पुरुषा बभूवुः। साऽपि सैव प्रवृत्तिः। यदपरं नृत्तवाद्यादिकमेषा चक्र सा भारती वृत्तिः। तां ते मुनय इति समानं पूर्वेण। तथाविधाकल्पयापि यदा यद्

---

तदस्यास्तीति अर्शआद्यच्। सूत्रो ग्रथितो हारो यत्रासौ सान्द्रमलयजविलेपन-धवलितस्तनमण्डलकलितपुष्पमाल्यः। सीमन्तं केशवेशं 'सीमन्तः केश-वेशे स्यात्' इत्यमरः। चुम्बतीति, एवंभूतः सिचयोंऽशुकं यत्रासौ केशवेश-स्थितांशुकः। स्फुटं बाहोर्मूलं यत्रासौ दृश्यमानभुजयुगलमूलस्तत्रानाच्छाद-नात्। स्वयं गौरीष्वपि। अगुरुणः उपभोगो राजाहंस्य निर्वेशः। 'अगुर्वंगरुरा-जार्हम्' इति हैमः, 'निर्वेश उपभोगः स्यात्' इत्यमरः। तस्मात् अगरूपलेपनात्। प्रशस्ता दूर्वा दूर्वाप्रकाण्डा तद्वत् रुचिरासु मनोहरासु श्यामासु गौडानामङ्गनासु एष आर्द्रार्द्रेत्यादिना वर्ण्यमानो वेशो नेपथ्यश्चिरं बहुकालं चकास्तु शोभताम्। कुचयोः सान्द्रमलयजानुलेपेन कामतापाधिक्यं प्रकाशयते। यतस्तापापनुत्तये शैत्य-वस्तूपभोगो लोके दृश्यते। पौष्पदाम्ना सौन्दर्योपासकत्वं व्यज्यते। बाहुमूलस्य स्फुटतया कुचभागावलोकनेनाकर्षत्वं व्यज्यते। अगरूपलेपेन सर्वदा श्यामात्व-मस्मासु प्रतीयतामित्याकाङ्क्षा ध्वन्यते। श्यामा षोडशवार्षिकी इति।

वेषस्य भावानाञ्च स्वाभाविकत्वानाकलनादवशंवद इत्युच्यते—ॐयदृच्छयेतिॐ काव्यपुरुषानुकूलवेषाः पुरुषा अभूवन्। सापि पुरुषाणां व्यवहृतिरपि सैवौड्रमागधी प्रवृत्तिः। तदनुरञ्जनाय औमेयीकृता नृत्तवाद्यादयो भारती वृत्तिः। भरतेन तु भिन्नरूपैवोक्ता—

या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता।
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥ इति।

तादृशवेषयापि तया यत्तु स्ववशेऽकृतः सन् समस्तमनुप्रासयुतम्। वृत्तेः शक्तेः परम्परा अनादिप्रवाहो यस्यां सा वृत्तिपरम्परा रूढिः, स योगो गर्भे कुक्षौ यस्य स

---

प्रतीत हो रहा है ऐसा अगर के उपभोग से दूर्वांकुर के सदृश सुन्दर यह वेष गौड़ महिलाओं में चिरकाल तक सुशोभित हो।

अपनी इच्छा से जिस वेष को काव्यपुरुष ने पहना वही वेष वहां के पुरुषों ने स्वीकार किया। वह प्रवृत्ति उसी नाम से प्रसिद्ध हुई। इसके बाद उमापुत्री ने जो नृत्त, गीत, वाद्य विलास किया उसकी संज्ञा भारती वृत्ति हुई। उस वृत्ति की मुनियों ने स्तुति की। सुन्दर वेष-भूषा की कल्पना करने पर भी वह (का० पु०) उस (उ० पु०) के वश में

वशंवदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परातद्‌गर्भं ( वाक्यं ) जगाद सा गौडीया रीतिः। तां ते मुनय इति समानं पूर्वेण। वृत्तिरीतिस्वरूपं यथावसरं वक्ष्यामः।

ततश्च स पञ्चालान्प्रत्युच्चचाल। यत्र पाञ्चालशूरसेनहस्तिनापुरकाश्मीरवाहीकबाह्लीकबाह्वेयादयो जनपदाः। तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण। सा पाञ्चालमध्यमा प्रवृत्तिः। तां ते मुनयोऽभितुष्टुवुः—

---

तद्‌गर्भः, योगश्च वृत्तिपरम्परा च तद्‌गर्भश्चेति योगवृत्तिपरम्परातद्‌गर्भाः। ते यस्मिन्वाक्ये तत्तथा। अभिधाप्रधानं वाक्यं जगाद सा गौडीया रीतिः। तां रीतिं मुनयोऽभितुष्टुवुरिति सर्वत्रानुसन्धेयम्। *यथावसर इति*-अस्मिन्नेवाध्याये काव्यपुरुषभ्रमणविश्रान्तौ।

इत्थं प्राचीदिशो भ्रमणं निरूप्योत्तरदिग्गमनमुपक्रमते-*तत इति। ततः प्राचीदिशो भ्रमणानन्तरं स काव्यपुरुषः पञ्चालान् उत्तरदिग्भवान् देशान् प्रति उच्चचाल। यत्रोत्तरदिशि पाञ्चालप्रभृतयो जनपदाः। तत्र तं काव्यपुरुषमभियुञ्जाना औमेयी साहित्यविद्यावधूः यं वेषमसेविष्ट स वेषस्तद्देशभवाभिः स्त्रीभिरन्वक्रियत इति सर्वत्रानुसन्धेयम्। सा प्रवृत्तिः पाञ्चालमध्यमा। तदुक्तं भरतेन—

पाञ्चालाः शौरसेनाश्च काश्मीरा हस्तिनापुराः। इति।
हिमवत् संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम्।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमा। इति।

तां ते इति पूर्ववत्।

*ताटङ्केति*। ताटङ्कस्य कर्णभूषणस्य, 'ताटङ्कः कर्णभूषणम्' इत्यमरः। वलनेन संचलनेन तरङ्गिता संजातोर्मिकेव गण्डलेखा यस्मिन् तम्। आ नाभिमभिव्याप्येति 'आङ्मर्यादाभिविध्योरि'ति समासः। नाभिपर्यन्तम् लम्बते इति ताच्छील्ये णिनिः आनाभिलम्बी। स च दरं यथा तथा दोलितः ईषद्दोलायमानः तारः शुद्धः 'मुक्ताशुद्धौ च तारः स्यात्' इत्यमरः। हारो यत्र तम्। श्रोणिश्च गुरुश्चेति श्रोणि-

---

नहीं आया। इसी वास्ते उस ( का० पु० ) ने जो समास-बहुल आनुप्रासिक और योगवृत्ति परम्परागर्भ वाक्य कहे उसका नाम गौडीया रीति हुआ। उस रीति की मुनियों ने स्तुति की। वृत्ति-रीतियों का लक्षण यथासमय आगे चलकर कहेंगे।

इसके बाद वह उत्तर दिशा की तरफ चला। जहाँ पाञ्चाल, सूरसेन, हस्तिनापुर, काश्मीर, वाहीक, वाह्लीक, बाह्वेय प्रभृति जनपद हैं। वह प्रवृत्ति पाञ्चाल मध्यमा नाम से प्रसिद्ध हुई। उस प्रवृत्ति की मुनियों ने स्तुति की :—

'ताटङ्कवल्गनतरङ्गितगण्डलेखमानाभिलम्बिदरदोलिततारहारम् ।
आश्रोणिगुल्फपरिमण्डलितान्तरीयं वेषं नमस्यत महोदयसुन्दरीणाम् ॥'

किञ्चिदार्द्रमना यन्नेपथ्यः स सारस्वतेय आसीदिति समानं पूर्वेण । साऽपि सैवेति समानं पूर्वेण । यदीषन्नृत्तगीतवाद्यविलासादिकमेषा दर्शयांबभूव सा सात्वती वृत्तिः । आविद्धगतिमत्त्वात्सा चारभटी । तां ते

---

गुल्फौ । तौ क्रमश आरभ्य अभिव्याप्येति आश्रोणिगुल्फम् । गुल्फो घटिका । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । अत्राङ् उभयार्थकः । परिमण्डितमन्तरीयमधोवस्त्रं यस्मिन् तम् । तत्रोत्तरीयमित्यपपाठः । तस्योर्ध्ववस्त्रत्वात् । अत्र चाधोवस्त्रस्यैव वर्णनीयत्वात् ।

नाभौ धृतं च यद्वस्त्रमाच्छादयति जानुनी ।
अन्तरीयं प्रशस्तं तदाच्छन्नमुभयोस्तयोः ॥ इति ।

इत्युक्तलक्षणमन्तरीयमेवात्रापेक्षितम् । एवं भूतम् । महोदयाः कान्यकुब्जाः । तेषां सुन्दरीणां रमणीनां वेषं नेपथ्यं नमस्यत । तरङ्गितेत्यनेन रोमाञ्चरूपसात्त्विकभावाविर्भावो व्यज्यते । तेन च कामासक्तिर्व्यज्यते । हारस्य दरदोलनेन चाञ्चल्यं व्यज्यते, आश्रोणिगुल्फेति पदेन परिधानविन्याससौन्दर्यं प्रतीयते ।

किञ्चिदीषद् आर्द्रमना; अनुरक्तः यन्नेपथ्ये इति समानं पूर्वेण । सापीति समानं पूर्वेण । यदीषदिति । यत् ईषद् किंचित् नृत्तं गीतं वाद्यं विलास आदिर्येषां तत् । किञ्चिदीषत्पदाभ्यामनुरक्तिः प्रकाश्यते । एषा साहित्यवधूः दर्शयामास सा सात्वती वृत्तिः । भरतेनास्याः स्वरूपमित्थमुक्तम्—

या सात्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्वती नाम भवेत्तु वृत्तिः ॥ इति ।

सैषा सात्वती एव आविद्धा कुटिला गतिर्विद्यते यस्यां सा । तस्या भावस्तस्मात् । आरभटी । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । तथा चोक्तं भरतेन—

---

कर्णभूषण के किंचित्स्पन्दन से कपोलस्थली जिसमें रोमाञ्चयुक्त हो गई है और जिसमें नाभि तक लटका हुआ शुभ्र मुक्ताहार कुछ हिल रहा है तथा कटि से लेकर घुटनों तक अङ्ग जिसमें छिपे हुए हैं ऐसे कान्यकुब्ज रमणियों के वेष को नमस्कार करते हैं ।

कुछ अनुरक्त होकर काव्यपुरुष ने जिस वेष को धारण किया इत्यादि सब पहले की तरह है । जो इस उमापुत्री ने नृत्त-वाद्यादि किये उसकी संज्ञा सात्वती वृत्ति हुई । नृत्त-वाद्यादि में कुछ कौटिल्य होने से उसी वृत्ति का नाम आरभटी पड़ा । साहित्य

तेन विघ्नः, प्रसादेऽत्र नृणां हेतुरमानुषः ।।
न निसर्गकविः शास्त्रे न क्षुण्णः कवते च यः ।
विडम्बयति सात्मानमाग्रहग्रहिलः किल ।।
कवित्वं न स्थितं यस्य काव्ये च कृतकौतुकः ।
तस्य सिद्धिः सरस्वत्यास्तन्त्रमन्त्रप्रयोगतः ।।
यदान्तरं वेत्ति सुधीः स्ववाक्यपरवाक्ययोः ।
तदा स सिद्धो मन्तव्यः, कुकविः कपिरेव वा ।।'

---

भावाः स्फुरन्ति। तेन हेतुना विघ्नः। अत्र प्रसादे प्रसन्नतायां नृणाममानुषोऽलौकिको हेतुः। कस्यचिद्दोषे दृष्टिः, कस्यचिद्गुणे पक्षपातः, कस्यचन रसे भावावेशः, कस्यचनालंकारे धारणा भवति। अतः सहृदयानां प्रसन्नतायाः कारणमलौकिकमेव।

कवित्वं न सुलभमिति निर्दिशति। ॐन निसर्गेतिॐ। यस्य प्राक्तनवासनाख्यम् प्रतिभानं नास्ति, न च शास्त्रे क्षुण्णः अर्थात् श्रुतं निर्मलं नास्ति। स आग्रहे ग्रहिलो हठी आत्मानं विडम्बयति वञ्चयति।

तर्हि कथं तस्य सिद्धिरित्याह। प्राक्तनवासना नास्ति, काव्यं कर्त्तुं ज्ञातुं चेहते। तस्य सारस्वतानुभावात् सिद्धिः। सोऽनुभावस्तंत्रमंत्राणामनुष्ठानाद् भवति।

यदेति। यदा सुधीर्विद्वान् स्ववाक्यपरवाक्येषु स्थितानां पदानामन्तरं विभेदं वेत्ति। तदा स सिद्धो मन्तव्योऽन्यथा कवयिता कुत्सित एव। अन्यथा स्वपरवाक्यघटकपदान्तरवेदनाभावे इत्यर्थः। वा अथवा कपिरेव। कपिर्यथा चापल्येन जडतया च स्वपरकृत्यविचारमूढो भवति तथैवायमपि स्वपरवाक्यान्तःपातिपदान्तरवेदनानभिज्ञो भवति।

---

होता है प्राणियों की प्रसन्नता का कारण अलौकिक है।

जो न स्वाभाविक कवि है, और न जिसका शास्त्र निर्मल है, वह हठी अपनी विडम्बना करता है। ऐसे मनुष्य को यदि सिद्धि हो सकती है तो सरस्वती के तंत्रमंत्रादि के अनुष्ठान से ही हो सकती है।

जब विद्वान् को अपने और दूसरों के वाक्यों के पदों में अन्तर मालूम पड़ने लगे तब समझना चाहिए कि वह सिद्ध हो गया। अन्यथा वह कुत्सित कवि है वा कपितुल्य है।

कारयित्रीभावयित्र्यावितीमे प्रतिभाभिदे ।
अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम् ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे शिष्यप्रतिभाव्याख्यानः चतुर्थोऽध्यायः ॥



---

इति प्रदर्शितमुपसंहरति । इत्थं पूर्वोक्तप्रकारेण इमे कारयित्रीभावयित्र्यौ प्रतिभाया भिदे भेदौ निरूपिते । अथानन्तरं यतो व्युत्पत्तिः काव्यकारणमतो मातृवदुपजीव्यां तां कथयिष्यामः निरूपयिष्यामः ।

इति आहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ चतुर्थोऽध्यायः ।



---

इस तरह प्रतिभा के कारयित्री और भावयित्री दो भेद हुए। अब इसके बाद काव्यमाता-व्युत्पत्ति का निरूपण करेंगे ।

इति बालक्रीडायां चतुर्थोऽध्यायः ।



## अथ पञ्चमोऽध्यायः

# व्युत्पत्तिकविपाकाः ५

'बहुज्ञता व्युत्पत्तिः' इत्याचार्याः। सर्वतोदिक्का हि कविवाचः। तदुक्तम्—

---

वैबुधपदमासीनो भवति कविर्यत्प्रसादतो भुवने।
वाणीकलया कलितां व्युत्पत्तिं काव्यमातरं वन्दे॥

पूर्वस्मिन्नध्याये 'अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम्' इति प्रतिज्ञया अध्यायद्वयमैत्रीमासूत्र्य अनन्तरवक्तव्यत्वरूपावसरसंगत्या व्युत्पत्तिं निर्दिदिक्षुर्ग्रन्थकारः प्रसङ्गसंगत्या कविपाकौ निर्देक्ष्यन् सूत्रमारचयति व्युत्पत्तीति। व्युत्पत्तिश्च कविश्च पाकश्च इति व्युत्पत्तिकविपाकाः भाष्योदाहरणैः क्रमशो व्याख्यास्यन्ते। इति सूत्रार्थः।

पूर्वं विस्तीर्णां व्युत्पत्तिं दर्शयितुमाचार्याणां मतमाचिनोति। बहुज्ञतेति। बहुवस्तुपौर्वापर्यपरामर्शकौशलम्। इत्याचार्याः। समर्थयति। *सर्वेति*। हि यतः कवीनां वाचः सर्वदिशि गमनशीलाः। सर्वविषयवर्णनकारिण्य इत्यर्थः।

---

प्रथम अध्याय की समाप्ति में कह आये हैं कि अब यहां से काव्यमाता-व्युत्पत्ति का निरूपण करेंगे। अतः उसी के अनुसार सूत्र लिखते हैं।

व्युत्पत्तिकविपाकाः। इस अध्याय में व्युत्पत्ति, कवि और पाक इनकी व्याख्या करेंगे।

सबसे पहले व्युत्पत्ति की व्याख्या करते हैं।[1] बहुज्ञता का नाम व्युत्पत्ति है। क्योंकि कवि लोग बहुत से विषयों का वर्णन किया करते हैं। जब तक कवि लोग बहुत विषयों को नहीं जानेंगे तब तक उनका वर्णन नहीं कर सकते हैं। अतः बहुज्ञता का नाम व्युत्पत्ति है ऐसा आचार्यों का मत है जैसे कहा भी है—

---

१. रुद्रट ने अपने काव्यालङ्कार ग्रन्थ में दो तरह की व्युत्पत्ति बतलाई है। एक संक्षिप्त दूसरी विस्तृत। उन्हीं दोनों में से एक को आचार्य के नाम से तथा दूसरी को अपने नाम से यहां पर राजशेखर ने बतलाया है।

'प्रसरति किमपि कथञ्चन नाभ्यस्ते गोचरे वचः कस्य ।
इदमेव तत्कवित्वं यद्वाचः सर्वतोदिक्काः ॥'

'उचितानुचितविवेको व्युत्पत्तिः' इति यायावरीयः । 'प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसी' इत्यानन्दः । सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति । तदाह—

---

तदुक्तमिति प्रकृतोपपादकं पद्यमुपन्यस्यति । *प्रसरतीति* । अभ्यस्ते शीलिते गोचरे विषये कथञ्चन कृच्छ्रात् किमपि वक्तुं कस्य जनस्य बचो वाणी न प्रसरति प्रचलति । सर्वस्यापीति भावः । तत्प्रसिद्धं कवित्वमिदमेव, यद् वाचः सर्वविषयवर्णनकारिण्यः । सत्यामेव बहुज्ञतायां बहुविषयवर्णनसामर्थ्यं सम्पद्यत काव्ये च बहवो विषया दृश्यन्ते वर्णिताः । तामन्तरा कथं वर्ण्येरन् । अतो बहुज्ञतैव विस्तीर्णा व्युत्पत्तिरित्याचार्याणामाशयः ।

संक्षिप्तां तां दर्शयितुमिदानीं स्वमतं प्रस्तौति । *उचितेति । युक्तायुक्तविचारो इदं छन्द इदं पदमयं रसः अत्र उचितोऽनुचितो वेति विवेको व्युत्पत्तिः, इति यायावरकुलोत्पन्नो राजशेखरः । अत्र व्युत्पत्तिविषये आचार्यैः स्वग्रन्थे समासव्यासतया द्विविधः स्वाशयौ लक्षितः । तत्र राजशेखरेण एकस्तदुक्त्या दर्शितः । अन्यः स्वोक्त्या । तथा चेमौ तेषां श्लोकौ—

छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानम् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥
विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके ।
न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्यैषा ॥

प्रतिभाव्युत्पत्त्योस्तरतमभावं परमतेन दर्शयति—प्रतीति । उभयोर्मध्ये प्रतिभा श्रेयसी । इत्यानन्दः । आनन्दवर्द्धनाचार्यः । नामैकदेशे नामग्रहणम् । श्रेयस्त्वे हेतुमुपन्यस्यति ।

प्रतिभा हि वर्णनीयवस्तुविषयनूतनोल्लेखशालिता हि कवेः कवयितुरव्युत्पत्तिकृतमनिपुणताजन्यं दोषं संवृणोति । तदाहेति । प्रकृतसाधकं पद्यमुपन्यस्यति । तदा आनन्दवर्द्धनाचार्य इति शेषः ।

---

अभ्यस्त विषयों में कुछ भी कहने के लिए किस की वाणी प्रवृत्त नहीं हो सकती है अर्थात् सबकी वाणी प्रवृत्त हो सकती है । पर कवि उसी का नाम है जो सब विषयों का यथार्थ वर्णन कर सके ।

अब अपना मत प्रकट करते हैं । इस जगह यह पद या वाक्य या अलङ्कार या गुण उचित है और यह अनुचित है या इस विचार का नाम व्युत्पत्ति है । प्रतिभा और

'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते ॥'

शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते । प्रतिभा यथा—

'एतत्किं शिरसि स्थितं मम पितुः, खण्डं सुधाजन्मनो
लालाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगाः ।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः

---

अव्युत्पत्तीति । अव्युत्पत्तिकृतोऽव्युत्पत्तिजन्यः कवेर्दोषो दूषणम् शक्त्या प्रतिभया संव्रियत आच्छाद्यते । यस्तु दोषस्तस्य कवेः अशक्तिकृतः स झगित्येव झटित्येव अवभासते प्रतीयत इति ।

ननु प्रतिभां प्रस्तूय किमिति शक्त्येति अप्रस्तुतमुच्यते, इति शंकमानमाह—शक्तीति । अयं श्लोकस्थः शक्तिशब्दः प्रतिभाने प्रतिभायामुपचरितः लक्षणया प्रयुक्तो वर्त्तते । शक्तिशब्दस्य सामर्थ्ये रूढेः ।

उदाहृत्य दर्शयति—एतदिति । दिग्वाससः शिवस्याभूषणादिविषये पार्वतीगुहयोरुक्तिप्रत्युक्तिरूपं पद्यम् । मातरं पार्वतीं प्रति गुहस्य प्रश्नः । हे मातः ! मम पितुः शिरसि स्थितं एतद् दृश्यमानं किमस्ति । उ० । सुधाजन्मनश्चन्द्रस्य खण्डम् प्र० । इदं ललाटं ( ललाटे स्थितम् ) किम् । उ० । इदं विलोचनम् । प्र० । अस्य हस्ते किम् । उ० । पन्नगाः सर्पाः । इत्थं क्रौञ्चरिपोर्गुहस्य प्रश्ने क्रमात् क्रमश उपगते शिरस्तः कटिपर्यन्तं प्राप्ते सति दिग्वाससो नग्नस्य शूलिनः वामकरेणोपरोध आच्छादनम् । (अग्रे पुंव्यञ्जनविषये मा कदाचित्प्रश्नं कुर्यादिति बुद्ध्या क्रौञ्चरिपोर्मुखस्या-

---

व्युत्पत्ति में प्रतिभा अच्छी है। ऐसा आनन्दवर्द्धन का मत है। क्योंकि अव्युत्पत्ति से होने वाले दोषों को वह दबा देती है । जैसे कहा भी है—

अव्युत्पत्ति से होने वाले दोषों को शक्ति छिपा देती है किन्तु जो दोष शक्ति के न रहने से होते हैं, वे साफ प्रतीत होने लगते हैं । शक्ति पद यहां पर प्रतिभा में लाक्षणिक है ।

अव्युत्पत्तिजन्य दोषों को निवारण करने वाली प्रतिभा का उदाहरण देते हैं—एतदिति ।

यहाँ पर पार्वती और कार्तिकेय का परस्पर संवाद है। का० पूछते हैं। पिताजी के मस्तक पर यह क्या है। उ० चन्द्र का खण्ड है। प्र० ललाट में क्या है। उ० नेत्र हैं। प्र० हाथ में क्या है। उ० सर्प है। इस तरह का० के बराबर प्रश्न करते रहने पर शङ्कित होकर शायद किसी अङ्गविशेष के सम्बन्ध में प्रश्न न कर बैठे इसलिए नग्न महादेव ने उसके मुख को ढाँप दिया। पार्वती जी भगवान् का आशय समझ

प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः ॥

'व्युत्पत्तिः श्रेयसी' इति मङ्गलः । सा हि कवेरशक्तिकृतं दोषमशेषमाच्छादयति । तथा हि—

'कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि ।
वैदग्धीचित्तचित्तानां हेया शब्दस्य गुम्फना ॥'

---

च्छादनं शूलिना कृतम् ) तेन सुभगं सुन्दरं देव्या गौर्याः स्मितमनुपलक्षितदशनो हासः । 'अदृश्यदशनो हासो मधुरः स्मितमुच्यते' इत्युक्तेः । वो युष्मान् पातु ।

इदं व्युत्पत्तिजन्यदोषसंवारिकायाः शक्तेरुदाहरणम् । इदं तत्त्वम् अत्र कविना प्रतिभावशात् हास्यानुगुणोर्थः कल्पितः, किन्तु शब्दैर्यथावत्प्रकाशयितुं न समर्थः । तथाहि वामकरेणोपरोधः शूलिना किमर्थं कस्य च कृतः इत्याद्यर्थस्य स्पष्टप्रतिपत्तये आक्षेप एव शरणम् । एवमस्य कवेरव्युत्पत्तिः सहृदयचेतस्युद्भच्छन्त्यपि शब्दयुक्त्या-पितार्थसौन्दर्यबलाच्चमत्कारान्तर्विलीना भवतीति ।

व्युत्पत्तिर्दोषवारिकेति पूर्वविपरीतं मतं निर्दिशति । *व्युत्पत्तिरिति* । शक्त्यपेक्षया व्युत्पत्तिर्निपुणता श्रेयसी सातिशया ।

हेतुं वदति । यतः सैव कवयितुरशक्तिकृतं दूषणमावृणोति । तथाहीति तदुपष्टम्भकं पद्यमवतारयति—*कवेरिति* । काव्यमार्गे व्युत्पत्त्या कवयितुरशक्तिः अर्थानुकूलशब्दयोजनाऽसामर्थ्यं संव्रियते । तस्मात् । वैदग्धी चातुर्यम् । सा चित्ता सम्यग्ज्ञाता यैरेवंभूतानि चित्तानि अन्तःकरणानि येषां तेषां परिचितचातुरीकाणाम् ( कृत्यानां कर्त्तरि वेति षष्ठी) तैरित्यर्थः । शब्दस्य गुम्फना हेया । यमकानुप्रासयोर्न विशेषादरो विधेयः कविभिः, अर्थ एव विशिष्य प्रयतनीयम् । एतन्मतेऽर्थ एव चमत्कारस्तदग्रे शब्दगुम्फनमकिञ्चित्करम् । अत्र मुद्रितपुस्तकेषु शब्दार्थगुम्फनेति अर्थघटितः पाठोऽपपाठ इतीषन्निमीलितलोचनैः सुधीभिर्विवेचनीयम् ।

---

कर हँसने लगी । इस तरह हँसती हुई पार्वती जी आप लोगों की रक्षा करें ।

जयमङ्गल कहता है कि व्युत्पत्ति अच्छी है । क्योंकि वह, शक्ति न रहने से होने वाले दोषों को दबा देती है ।

काव्यमार्ग में अशक्तिजन्य दोष व्युत्पत्ति से दब जाते हैं इसलिए बुद्धिमानों को चाहिए कि[1] शब्दार्थ गुम्फन की तरफ विशेष ध्यान न दें । किन्तु व्युत्पत्ति ही के उपार्जन के लिए विशेष ध्यान दें ।

---

१. यद्यपि हमने अपनी विवृति में शब्दार्थ की जगह शब्दस्य किया है और उसकी व्याख्या भी उसी के अनुकूल ही है । तथापि वह भी एक कल्प है इसलिए सहृदय पाठकों को जो उचित हो वही कर लें ।

व्युत्पत्तिर्यथा—

'कृतः कण्ठे निष्को नहि किमुत तन्वी मणिलता
कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि।
न कौशेयं चित्रं वसनमवदातं तु वसितं
समासन्नीभूते निधुवनविलासे वनितया ॥'

'प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ' इति यायावरीयः। न खलु

---

अशक्तिकृतदोषनिवारिका व्युत्पत्तिर्यथा—*कृत* इति। वासकसज्जाया वर्णनमिदम्। निधुवनविलासेऽनंगोत्सवविधौ समासन्नीभूते प्राप्ते सति। वनितया उत्पन्नरागया स्त्रिया। 'वनिता जातरागा स्त्री' इति शब्दकल्पद्रुमः। कण्ठे निष्कोपि न हि कृतः तन्वी मणिलता कर्त्तव्येति किमुत किं वक्तव्यम्। आलिङ्गनव्यवधानकारित्वात्तन्वी मणिलता अपि हृदये न धार्यते। कुण्डलं मुञ्चतीति तस्मिन् कुण्डलमुचि कुण्डलरहिते। श्रवसि कर्णे। जातित्वादेकवचनम्। कर्णयोरिति यावत्। एकस्मिन् कर्णे भूषणधारणं न परं प्रतिकर्मविधिविरुद्धं सौन्दर्यविघातकमपि। चित्रं नानावर्णं कर्बुरम्। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। कौशेयं कृमिकोशोत्थं वसनमंशुकं न वसितं नावधारितं तु किन्तु अवदातं सितं वसनं वसितम्। 'अवदातः सितो गौरः' इत्यमरः। इदं पद्यमशक्तिजन्यदोषसंवारिकाया व्युत्पत्तेरुदाहरणम्। अयं भावः वासकसज्जायाः संभोगशृङ्गारवर्णने तदुचितकोमलवर्णोपन्यासो योग्यः। तथैव तस्य पुष्टिरन्यथा तत्पुष्टिर्वार्येत। तदेष दोषः कारणान्तरैस्तिरोधीयेत तर्हि नास्तिकल्पः स्यात्। तथा चात्र, 'तः क—' इत्यत्र जिह्वामूलीयस्य 'ण्ठ' इति मूर्धन्यस्य 'त तन्वी' इत्यत्र तकारस्य स्वानन्तर्यवर्गतयाऽश्रव्यत्वस्य 'त्र' इति श्रुतिकटुत्वस्य शृङ्गारपरिपन्थ्योजोव्यञ्जकतया कवे रसानुकूलनिर्माणाशक्तिः परिस्फुरन्त्यपि व्युत्पत्त्या तिरोधीयते।

स्वमतं परिष्करोति –*प्रतिभेति*। प्रतिभा च व्युत्पत्तिश्चेति ते प्रतिभाव्युत्पत्ती। मिथः परस्परं सङ्गते। आत्मनि समवायेन वर्त्तेते उभे इति तात्पर्यार्थः। प्रतिभाव्युत्पत्ती सातिशये। इति यायावरकुलीनः। दृष्टान्तयति। *न खल्विति*

---

व्युत्पत्ति जैसे—यहां पर वासकसज्जा का वर्णन है। सुरत समय में वनिता ने कण्ठ में निष्क भी नहीं धारण किया, मणिलता का तो कहना ही क्या। और कानों में कुण्डलों को हटाकर अत्यन्त सूक्ष्म लीलापत्र पहन लिया, और अनेक वर्णमयी रङ्गीन रेशमी साड़ी न पहन कर शुभ्र वस्त्र पहन लिया।

अब अपना मत बतलाते हैं। प्रतिभा और व्युत्पत्ति मिली हुई श्रेयस्कर हैं क्योंकि

लावण्यलाभादृते रूपसम्पदृते रूपसम्पदो वा लावण्यलब्धिर्महते सौन्दर्याय। उभययोगो यथा—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः

---

लावण्यलाभाद्विना रूपसम्पद् न महते सौन्दर्याय। रूपसम्पदो वा ऋते लावण्यलब्धिर्न महते सौन्दर्याय।

अत्र लावण्यरूपसौन्दर्यशब्दाः यद्यपि लोके सामान्येन एकार्थ एव प्रयुज्यन्ते तथापि विशेषरूपेण भिन्नार्थका एव। तथाहि अवयवानां निर्दोषता वा भूषणयोगो वा न लावण्यपदार्थः। यतः काणादिदोषशून्यशरीरावयवयोगिन्यामप्यलंकृतायामपि लावण्यशून्येयमिति, अतथाभूतायामपि लावण्यामृतचन्द्रिकेयमिति सहृदयानां व्यवहारस्तस्मात्।

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥

लावण्यातिरिक्तधर्मान्तरमेव रूपम्। यतः सत्यपि लावण्ये नात्र रूपसम्पदिति सहृदयानां व्यवहारः तस्मात्।

अङ्गान्यभूषितान्येव केनचिद्भूषणादिना। येन भूषितवद् भान्ति तद्रूपमिति कथ्यते॥

सतोरपि रूपलावण्ययोर्नेदृशः संस्थानमुग्धिमा इति सहृदयानां व्यवहारः परिस्फुटो दृश्यते तस्मात्।

अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्।

एवं शोभाकान्तिलडहादीनां प्रातिस्विकवैशिष्ट्येन भिन्नत्वं ज्ञेयम्।

उभयजन्यदोषनिवारिकयोरुभययोर्योगः। यथा—॥जङ्घाकाण्डेति॥। बाणभट्टकृते चण्डीशतके पद्यमिदम्। भर्त्तुर्महेश्वरस्य नृत्तानुकारे 'पदार्थाभिनयो नृत्यं नृत्तं ताललयाश्रितम्' इतिलक्षणकनर्तनानुकरणे भवान्या अभिनव इदंप्रथमतया नृत्यप्रवृत्तः दण्डपादः 'प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते', इत्युक्तलक्षणश्चरणः जयति सर्वोत्कर्षेण वर्त्तते। इति योजना। किंभूतः। निजा भवानीसम्बन्धिनी तनुरेव स्वच्छा लावण्यस्य वापी। अत्र तनोर्वापीत्वे लावण्यं जलं तत एवाग्रेऽम्भोजेत्युक्तिः। तस्यां सम्भूतं यदम्भोजं तस्य शोभां विदधत् विशेषेण धारयत्। दण्डपादस्याम्भोजत्वमुपपादयति। ॥जङ्घेति॥। जङ्घाकाण्डमेवोरुर्महान्नालो यत्र। नखकि-

---

लावण्य के बिना रूपसम्पत्ति सुन्दर नहीं प्रतीत होती है और रूपसम्पत्ति के बिना लावण्य शोभा नहीं देता है।

दोनों के योग में उदाहरण जैसे—स्वामी महादेव के नृत्य के अनुकरण के समय अपने शरीररूपी स्वच्छ लावण्यवापी से पैदा हुए कमल की शोभा प्राप्त करने वाला

प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥'

प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते। स च त्रिधा। शास्त्रकविः काव्यकविरुभयकविश्च। 'तेषामुत्तरोत्तरीयो गरीयान्' इति श्यामदेवः। 'न' इति यायावरीयः। यथा स्वविषये सर्वो गरीयान्। नहि

रणा एव लसन्ति केसराणि तेषामाल्या पङ्क्त्या करालो नतोन्नतः। प्रत्यग्रस्यालक्तकस्य तत्कालयोजितस्य जतुनो भानां कान्तीनां प्रसरा एव किसलयानि यस्य। मञ्जुमंजीरः सुन्दरपादभूषणमेव भृंगो यत्र सः। एवं सति उपमानधर्मस्याम्भोजशोभाया दण्डपादे समारोपः समर्थितो भवति। तथा चात्र रूपकनिदर्शनयोः सम्भवः। किन्तु यत्रारोपस्योपमानारोपस्वरूपत्वं तत्र रूपकम्। यत्र तु तदभावस्तत्र निदर्शना। यतः कविकल्पितोपमानेनापि बहुत्रोपमा दृश्यते। एवं चात्र निदर्शना तदुपपादकं तु जङ्घेति रूपकचतुष्टयम्। उभयदोषनिवारकोभययोगे दृष्टान्तः। इत्थमत्रावधेयम्। अत्र यद्यपि विपूर्वकस्य दधातेः करणे शक्त्या धारणे शक्त्यभावादवाचकत्वं दोषः प्रधानक्रियान्वयिकारकपदार्थ एवान्वयः, इति नियमबलाद्दण्डपाद एव निजपदार्थस्यान्वयः प्रतीयते न तु भवान्याम्। एवमत्राभवन्मतयोगो दोषः। तथापि कवयितुः शक्तिव्युत्पत्तिभ्यां रूपकनिदर्शनान्तर्लीनाविव प्रतिभातः।

प्रतिभेति। आभ्यां युक्त एव कवयिता कविरिति शब्दभाक्। तं विभजति। ❀स च त्रिधेति❀। तेषामुत्तममध्यमाधमत्वं परमतेन वक्ति। ❀तेषामिति❀। स्वमतं विशद दर्शयति। ❀नेति❀। श्यामदेवेन यदुक्तं तन्न। कुत इत्यत आह—❀स्वविषय इति❀। स्वानुगुणे विषये सर्वः श्रेष्ठः। दृष्टान्तं प्रस्तौति। ❀यथेति❀। राजहंसाः,

पार्वती का नूतन दण्डपाद अत्यन्त सुन्दर प्रतीत होता है। जिसमें जङ्घाकाण्ड ही मानो बड़े बड़े नाल हैं। नखों की किरण मानो लसत्केशर हैं अत एव उनसे सुशोभित नूतन लगाया हुआ महावर मानो किसलय है, मञ्जुमञ्जीर ही मानो भौंरे हैं।

प्रतिभा और व्युत्पत्ति वाला ही कवि कहाता है। वह कवि शास्त्रकवि, काव्यकवि और उभयकवि भेद से तीन प्रकार का है। इसमें उत्तरोत्तर कवि श्रेष्ठ है। ऐसा श्यामदेव का मत है। राजशेखर कहता है कि यह मत ठीक नहीं है। क्योंकि सब कोई अपने-अपने

राजहंसश्चन्द्रिकापानाय प्रभवति, नापि चकोरोऽद्भ्यः क्षीरोद्धरणाय। यच्छास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति। यत्काव्यकविः शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति। उभयकविस्तूभयोरपि वरीयान्यद्युभयत्र परं प्रवीणः स्यात्। तस्मात्तुल्यप्रभावावेव शास्त्रकाव्यकवी। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे। यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति। काव्यसंस्कारोऽपि शास्त्र-

---

'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः', इत्युक्तलक्षणाः कौमुदीं पातुं न समर्थाः। किन्तूदकात् क्षीरोद्धरण एव तथैव प्रसिद्धिर्यथा—

'हंसो यथा क्षीरमिवाम्बुमध्यात्'। इति।

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्।
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः॥ इति

चकोरोऽपि जलेभ्यः क्षीरोद्धरणाय न समर्थः। किन्तु चन्द्रिकामेव पातुं समर्थः। इत्येव प्रसिद्धिर्यथा—

चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि।
विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि॥ इति।

उक्तत्रिविधकवीनां भेदं विवेचनापूर्वकं दर्शयति। ॐयदितिॐ। यद्यतः। शास्त्रकविः काव्ये रससम्पदो विच्छेदं जनयति। यद्यतः काव्यकविः (वक्ष्यमाणाष्टप्रकारस्वरूपः) शास्त्रे शास्त्रीयपदार्थप्रणयने कठिनमप्यर्थं कथनवैलक्षण्येन शिथिलीकरोति। उभयकविस्तु शास्त्रकाव्यकव्योः श्रेष्ठः, यदि स काव्ये शास्त्रे च परं प्रवीणः स्यात्। एवं तौ तुल्यप्रभावावेव। किन्तु उपजीव्योपजीवकत्वं परस्परं तयोरनुमोदामहे। यतः शास्त्रस्य संस्कारः काव्यं चारु करोति। केवलशास्त्रानुसारित्वं तु काव्यचारुत्वस्य निग्रहं करोति। यदाह—

'विद्वत्कवित्वमिव केकिरुतं न रेजे'। इति।

---

विषय में उत्तम है। न राजहंस चन्द्रिकापान कर सकता और न चकोर ही जल और दूध को अलग-अलग कर सकता है। जो शास्त्रकवि होता है वह काव्य में रस का विच्छेद कर देता है। काव्यकवि शास्त्र में तर्क के कठिन पदार्थ को उक्तिवैचित्र्य से शिथिल कर देता है। उभय कवि दोनों में श्रेष्ठ है अगर दोनों विषयों में प्रवीण हो। इस वास्ते शास्त्रकवि और काव्यकवि दोनों बराबर हैं। उपकार्योपकारकभाव दोनों में परस्पर हम भी मानते हैं क्योंकि शास्त्रसंस्कार काव्य को शुद्ध कर देता है और काव्यसंस्कार

वाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि। तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते। काव्यकविः पुनरष्टधा। तद्यथा—रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति। तत्र रचनाकविः—

'लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धगोलै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु।

---

काव्यसंस्कारोऽपि शास्त्रीयवाक्यस्य पाकं परिणतिसौष्ठवं अनुरुणद्धि अनुवर्तते। काव्यमात्रज्ञानाधीनत्वं विरुणद्धि विपरिवर्तते। यदाह—

'शास्त्रेषु भ्रष्टाः कवयो भवन्ति।' इति।

उक्तभेदभिन्नानपि प्रतिस्वं विकल्प्य दर्शयति—*तत्रेति*। विधत्ते करोति। अपिशब्दस्य काव्ये अनुषङ्गः। काव्येऽपीत्यर्थः। शास्त्रार्थं तदीयप्रमाणप्रमेयविचारं निधत्ते स्थापयति ;

अष्टधा अष्टप्रकारः। शब्दं सुप्तिङन्तपदमेव कवतेऽसौ शब्दकविः। मार्गो रीतिः। क्रमश एतान् उदाहरति—*तत्रेति*। रचनाकविः, उदाह्रियते, इति सर्वत्रापि योज्यम्।

*लोलदिति*। येन राज्ञा, वेलां समुद्रस्येत्यर्थः। आलङ्घ्य षण्डेषु पद्मादिसंघातेषु 'षण्डं पद्मादिसंघाते न स्त्री स्याद् गोपतौ पुमान्' इति मेदिनी। गन्धवाहाः वायवः, ('श्वसनः स्पर्शनो वायुः गन्धवाहानिलाशुगाः' इत्यमरः।) प्रापिरे प्राप्ताः। कीदृशेषु षण्डेषु। लोलद् चंचलं यद् लाङ्गूलं तदेव वल्ली लता ('वल्ली तु व्रततिर्लता' इत्यमरः।) तया वलयितं वेष्टितं बकुलानोकहानां बकुलवृक्षाणां स्कन्धगोलम् शाखामण्डलं यैस्तैः ('अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः 'गोलं तु मण्डले प्रोक्तं गोलः स्यात्सर्ववर्त्तुले' इति शब्दकल्पद्रुमः)। नदद्भिः शब्दं कुर्वद्भिः गोलाङ्गूलवल्लाङ्गूलं येषां तैः,कृष्णवानरैः, ('गोलाङ्गूलः कृष्णवानरः'इति राजनिघण्टुः।) अत एव प्रतिरसितेन जरन्त्यः कन्दरा एव मन्दिराणि येषु तेषु। कीदृशा वायवः। उद्दण्डेषून्नतेषु पिण्डीतगरेषु, (पिण्डीतगरः 'खर्जूरविशेषः' इति

---

शास्त्रवाक्य को रसवत् कर देता है। केवल शास्त्रानुसारिता वाक्य को नीरस कर देती है और केवल काव्यानुसारिता अशुद्ध कर देती है। उनमें शास्त्र कवि तीन प्रकार का है। काव्यकवि आठ तरह का होता है।

उन आठ तरह के कवियों में रचनाकवि का उदाहरण जैसे—उस राजा ने समुद्र की वेला को पार करके कमलखण्डों में जलाशय की प्रस्फुटित कमलिनियों की सुगन्ध से

षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालङ्घ्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥'

त्रिधा च शब्दकविर्नामाख्यातोभयभेदेन । तत्र नामकविः—

'विद्येव पुंसो महिमेव राज्ञः प्रज्ञेव वैद्यस्य दयेव साधोः ।
लज्जेव शूरस्य मृजेव यूनो विभूषणं तस्य नृपस्य सैव ॥'

आख्यातकविर्यथा—

उच्चैस्तरां जहसुराजहृषुर्जगर्जुराजघ्निरे भुजतटीनिकरैः स्फुरद्भिः ।
सन्तुष्टुवुमुमुदिरे बहु मेनिरे च वाचं गुरोरमृतसम्भवलाभगर्भाम् ॥'

---

शब्दकल्पद्रुमः । ) तरलनाः चञ्चलाः । पुनश्च कीदृशाः । उत्तालाः ये तल्ला जलाशयाः, ( 'तल्लो जलाशये' इति मेदिनी । ) तेषु स्फुटिता विकसिता याः पुटकिन्यः पद्मिन्यस्तासा बन्धवस्ताभिःसुगन्धयः ('पुटकिनी पद्मिनी पद्मलता चे'ति हेमचन्द्रः)।

*त्रिधेति* । नामाख्यातोभयभेदेन शब्दकविस्त्रिप्रकारः । अत्र नामाख्यातार्थेति अर्थघटितः पाठोऽपपाठः । अर्थकवेः स्वतन्त्रं वक्ष्यमाणत्वात् । तत्र त्रिप्रकारकशब्दकविभेदानां मध्ये प्रथमो नामकविः । नाम केवलं संज्ञाशब्दं कवतेऽसौ नामकविः । यथा *विद्येति* । स्पष्टम् । अत्र विद्याप्रभृतीनां संज्ञाशब्दानामेव संघटना कृता । नान्येषाम् ।

आख्यातं तिङन्तं कवते रचयति यः स आख्यातकविः यथा । *उच्चैस्तरामिति* । अमृतस्य स्वनामप्रसिद्धस्य देवासुरैर्मथ्यमानसमुद्रादुत्थितद्रव्यविशेषस्य सम्भव उत्पत्तिः, तस्य लाभो गर्भे यस्यास्ताम् । समुद्रमथनाद्भवद्भयोऽमृतलाभो भविष्यतीति साभिप्रायां गुरोर्बृहस्पतेर्वाचं श्रुत्वेति शेषः । शिष्टं स्पष्टम् । भुजतटानि करैरित्येव पाठः समीचीनः । मणिबन्धावधिपञ्चाङ्गुलीसमेतस्य हस्तस्याख्या कर इति,

---

मिश्रित वायु का सेवन किया, जो वायु ऊँचे-ऊँचे पिण्डखजूर को कँपा रही है और जिस तट पर कन्दरारूपी मन्दिरों को बकुलवृक्ष के स्कन्धमण्डल को अपनी चञ्चल लांगूलरूपी लता द्वारा वेष्टित करने वाले कृष्ण वानर अपनी प्रतिध्वनि से विशीर्ण कर रहे हैं।

शब्दकवि भी नाम, आख्यात और उभय भेद से तीन प्रकार का है । जिस तरह पुरुष की विद्या, राजा की महिमा, वैद्य की प्रज्ञा, साधु की दया, शूर की लज्जा और युवा की शुद्धि भूषण है उसी तरह उस राजा की वह नायिका भूषण हो रही है ।

आख्यातकवि जैसे । समुद्रमन्थन करने से तुम लोगों को अमृत मिलेगा ऐसी बृहस्पति की वाणी सुनकर ये लोग खूब हंसे इत्यादि ।

नामाख्यातकविः--

'हतत्विषोऽन्धाः शिथिलांसबाहवः स्त्रियो विषादेन विचेतना इव ।
न चुक्रुशुर्नो रुरुदुर्न सस्वनुर्न चेलुरासुर्लिखिता इव क्षणम् ।।

अर्थकविः--

'देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे
हर्षाद् भृङ्गिरिटावुदाहृतगिरा चामुण्डयाऽलिङ्गिते ।
पायाद्वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-
रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ।।

---

तदुपरितनस्यांसावधेराख्या भुज इति, एवं च हर्षादीनामुद्रेके करेण भुजस्यास्फोटनं भवतीति लोकवृत्तम् । अत्र जहसुरित्याद्याख्यातानामेवाधिक्येन रचना ।

नामाख्याते उभे कवते रचयति वर्णयति स नामाख्यातोभयकविः । ❀हतेति❀ । स्त्रियः भर्तुर्मरणे निष्प्रभाः, अन्धाः दुःखात्कुत्रापि गन्तुमसमर्थाः किमपि कर्तुमशक्ताश्चेत्यन्धसादृश्यम् । शिथिलौ अंसौ बाहू यासां ताः । विषादेन गतचेतना इव । अन्यत्स्पष्टम् । पूर्वार्धे नाम्नामुत्तरार्धे आख्यातानां रचना । तत्तद्रचनाकारिषु तत्तन्नामनिर्देशः कृतः ।

अर्थमात्रमलङ्कारादिशून्यं कवते वर्णयति यः सोऽर्थकविर्यथा । ❀देवीति❀ । देवी गौरी पुत्रमसूत सूते स्म । ततो हे गणाः ! नृत्यत नृत्यं कुरुत । किं तिष्ठत ? कथमुपविष्टा भवथ इति कृत्वा उद्भुजे ऊर्ध्वबाहौ भृङ्गरिटौ, एतन्नामके गणे हर्षात्प्रेमतो जातः भृङ्गिरिटिचामुण्डयो रवः शब्दो वो युष्मान् पायाद्रक्षतु । किम्भूतो रवः । परस्पराङ्गनिपातेन जर्जरं स्फुटितं यज्जरज्जीर्णं स्थूलास्थि तस्माज्जन्मोत्पत्तिर्यस्य सः । जिता देवदुन्दुभेर्देवभेर्याः । ('भेर्यामानकदुन्दुभी' इत्यमरः) घनध्वानस्य निबिड-

---

नामाख्यातोभयकवि जैसे—

पति के मर जाने में उन स्त्रियों की कांन्ति नष्ट हो गई अतएव वे कार्य करने में भी असमर्थ हो गईं । और उनके अंस और बाहु शिथिल पड़ गए और अत्यन्त खेद से वे अचेतन सी हो गईं । अतएव न वे रोईं न हाहाकार शब्द किया, और न इधर-उधर हिलीं, मानों क्षण भर चित्रलिखित सी रह गईं ।

अर्थकवि जैसे—देवी के पुत्र उत्पन्न हुआ है अतः हे गणलोगो । तुम नाचते क्यों नहीं ? खड़े क्यों हो ? यों कहकर ऊपर को हाथ किए हुए भृङ्गरिटि को, उसके कथन का अनुवाद करके चामुण्डा ने आलिङ्गन कर लिया । तब नगारे के कठिन शब्द को तिरस्कृत करने वाला परस्पर के अङ्ग-सम्मर्द से जीर्ण हुई स्थूल हड्डियों से पैदा हुआ शब्द आप लोगों की रक्षा करे ।

द्विधाऽलङ्कारकविः शब्दार्थभेदेन । तयोः शब्दालङ्कारः—

'न प्राप्तं विषमरणं प्राप्तं पापेन कर्मणा विषमरणं च ।
न मृतो भागीरथ्यां मृतोऽहमुपगुह्य मन्दभागी रथ्याम् ॥'

अर्थाऽलङ्कारः—

'भ्रान्तजिह्वापताकस्य फणच्छत्रस्य वासुकेः ।
दंष्ट्राशलाकादारिद्र्यं कर्त्तुं योग्योऽस्ति मे भुजः ॥

---

ध्वनेः प्रवृत्तिर्येन सः । अत्र देवी पुत्रमसूतेति परिष्कृतः चामुण्डाभृङ्गिरिटिपरिष्वङ्ग-संघट्टितपरस्परहृदयास्थिजन्यरवोऽर्थ एव वर्णितः । यद्यप्यत्र 'द व स त' 'नृत्यत' इत्यादिषु सर्वत्र—

'उच्चार्यत्वाद्यदैकत्र स्थाने तालुरदादिके । सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ।'

इत्युक्तलक्षणः, श्रुत्यनुप्रासः, कविनिष्ठचामुण्डाभृङ्गिरिटिविषयकरतिरूपभावश्च स्तः तथापि कवेस्तात्पर्याभावादकिञ्चित्करः । अर्थ एव कवेः संरम्भात् ।

॥द्विधेति॥ । शब्दालङ्कारार्थालंकारभेदेनालंकारकविर्द्विप्रकारः । तयोः शब्दा-लङ्कारार्थालङ्कारयोर्मध्ये शब्दालङ्कारो यथा ।

॥न प्राप्तमिति॥ । विषमं च जयाजययोरनवस्थितत्वाद् , हेतिहतीनां दुःखद-त्वाच्चासमानञ्च तद्रणं युद्धं न प्राप्तम् । किन्तु पापेन कर्मणा विषेण हालाहलेन मरणं प्राप्तम् । भागीरथ्यां गङ्गायां लक्षणया गङ्गायाः सविधे न मृतः । किन्तु मन्दभागी अहं रथ्यां प्रतोलीम् । 'रथ्या प्रतोली विशिखे'त्यमरः । उपगुह्य आलिङ्ग्य । रथ्यायामेवेत्य-र्थः । मृतः । प्रथमद्वितीययोः, तृतीयचतुर्थयोः पादयोर्मध्ये व्यपेतत्वात् मध्ययमकम् ।

अर्थालङ्कारः उदाहियत, इति शेषः । ॥भ्रान्तेति॥ । भ्रान्ता निःसरणानिःसरणे-नास्थिरा जिह्वैव पताका यस्य तस्य । फण इव छत्रं यस्य तस्य वासुकेः शेषनाग-स्य । दंष्ट्रैव शलाका छत्रपताकाधारणार्थं दण्डः तस्या दारिद्र्यमभावं कर्तुं सम्पाद-यितुं मे भुजो बाहुः एक एव ( न तु द्वौ ) योग्यः समर्थः । अत्र जिह्वायां पताकायाः फणे छत्रस्य, दंष्ट्रायां शलाकायाश्चारोपाद्रूपकालङ्कारः ।

'उक्तिर्नाम यदि स्वार्थो भङ्ग्या भव्योऽभिधीयते' ।

---

अलङ्कारकवि दो तरह का होता है । एक शब्दालङ्कारकवि और दूसरा अर्थालङ्कार-कवि । जिसमें पहले का उदाहरण देते हैं । हाय ! बड़ा दुःख है कि मुझे विषम रण नहीं मिला, किन्तु पाप कर्म से विष ( द्वारा ) मरण मिल गया । और भागीरथी के तीर पर मैं नहीं मरा किन्तु मन्दभागी मैं गली में मर रहा हूँ ।

अर्थालङ्कारकवि जैसे—भ्रान्त जिह्वा ही जिसकी पताका है, फण ही जिसके छत्र हैं । ऐसे वासुकि की दंष्ट्रारूपी शलाका को नष्ट करने के लिए यह मेरी भुजा ही समर्थ है ।

उक्तिकविः—

'उदरमिदमनिन्द्यं मानिनीश्वासलाव्यं स्तनतटपरिणाहो दोर्लतालेह्यसीमा।
स्फुरति च वदनेन्दुर्दृक्प्रणालीनिपेयस्तदिह सुदृशि कल्याः केलयो यौवनस्य ॥

एवंरूपामुक्तिं षड्विधां वक्रोक्तिमेव कवते वर्णयति यः स उदाहियते यथा। किञ्चन वनितासर्वस्वं विलोक्य सखा सखायं वक्ति। ॐउदरमितिॐ। इदं मम सर्वस्वं, मानिन्याः न तु विरहिण्यास्तस्याः सन्तापाधिक्याज्ज्वलितिप्रसंगात्। स्वश्वासेनापि लाव्यम्। अवश्यं लवितुं योग्यम् अतिलघु इति भावः। अनिन्द्यं प्रशंसनीयं कृशमिति यावत्—स्त्रीणामल्पोदरस्यैव प्रशस्तिः। उदरम्। स्तनतटस्य परिणाहो विशालता। ('परिणाहो विशालता' इत्यमरः।) दोरेव लता तया लेह्यस्य सीमा स्थितिः। तद्वेष्टनयोग्यस्थानम् विशालत्वात्। दृगेव प्रणाली तया निःशेषेण पातुं योग्यः। वदनमेवेन्दुः। स्फुरति प्रकाशते। अत्रोक्तावेव वैचित्र्ययोगितयाभिधान एव कवेस्तात्पर्यम्। तद्यथा। मद्दर्शनातिथित्वमस्मदीयदृष्टिगम्यत्वं वानुपनिबद्धय इदमा निर्देशः, कवेः संवृत्तिवक्रतायां तात्पर्यं गमयति। यदर्थं प्रयत्यमाना अपि यं न अद्राक्ष्म। तदिदमनिर्वचनीयं कामिनां सर्वस्वं वस्तु गोचरीक्रियत इति प्रत्यक्षनिर्देशकेदंशब्देन प्रतीयते। मानिनीश्वासलाव्यमिति पदं लघुतरमित्यर्थे प्रयुक्तम्। यन्मानिन्या श्वासलाव्यत्वमुदरस्य तत् सहृदयहृदयाह्लादकारित्वं गमयति अहो लघुत्वमनितरसाधारणम्। कुचयोः सुपीनत्वकठिनत्वकृते दोर्लतालेह्यसीमेति भणितिः यथा लता द्रुमपरिवेष्टिता सुस्थमात्मानं मनुते द्रुमे च तद्भरमान्थर्य नातिचकास्ति तथैव तद्भुजेऽपि तिष्ठेतां नाम कथंचिदपि तयोर्भुग्नतावकाशो न संभावनीयः। इति कवेर्वचनचातुर्याः परावधिं गमयति वदने चन्द्रत्वारोपार्थमिन्दुपदोपादानम्। सहजसौन्दर्यसम्पदुपेतस्य चन्द्रस्यानेकसंख्याकपर्यायेषु सत्स्वपि सहृदयहृदयामोदजनकं कमपि सातिशयं पुष्णाति यतो हि उनत्ति अमृतधारया भुवं क्लिन्नां करोत्यर्थकमिदं पदं सद्योदर्शनेन विरहवाडवाग्निसमुद्यज्ज्वालावलीढाङ्गान् युवजनान् समुल्लसद्विमललावण्यामृतवारिधिशीकरसम्भारेण निर्वाप्याप्लावयितुं सा समर्थेति स्फोरयति सचेतसां चेतसि। दृक्प्रणालीनिपेयः, यथा प्रणाल्या आवश्यकतानुगुणं शनैः शनैरातृप्तिक्षमं जलं प्रपायां पीयते तथैवास्या वदनेन्दुरपि आसेचकतानुगुणं किमपि त्रिभुवनातिशायिसौन्दर्यशालीति प्रतीयते।

---

उक्ति कवि, जैसे—मेरी मानिनी प्रिया का अपने दीर्घश्वास के आघात से कट जाने योग्य अत्यन्त यह सुन्दर उदर; दोनों बाहुओं के अन्दर भर जाने योग्य स्तनों की विशालता और आँखों के द्वारा एकटक निहारने योग्य चन्द्र के समान आह्लादजनक मुख सुशोभित हो रहा है। इससे सुन्दर नेत्रों वाली इस (प्रिया में) जवानी की मादकता से भरी केलियाँ (विलास) स्फुरित हो रही हैं।

यथा वा—'प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥'

रसकविः—

'एतां विलोकय तनूदरि ताम्रपर्णीमम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।

---

तत्तस्मात् इहास्मिन् सुदृशि सुनयनायां यौवनस्य कलया मादकाः केलयः स्फुरन्ति । स्फुरणं हि द्रवद्रव्यसधर्मवस्तु । ततः सकललोकविलक्षणं चाञ्चल्यं तस्याः प्रतीयते । तत्रापि अचेतनेषु केलिषु चेतनत्वाध्यारोपेण कविना कर्तृत्वमुपनिबद्धम्, तदपि तेषामनुभवैकगोचरत्वेन व्यपदेशदवीयसीपदवीप्रापणं ध्वनयति ।

यथा वेति अतृप्यन् पुनस्तामेव दर्शयति । ॐप्रतीच्छतीतिॐ । अधरः, आशोकीमशोकसम्बन्धिनीं किसलयपरावृत्तिं प्रतीच्छति प्रतिवाञ्छति । कपोलः, पाण्डुत्वात् ताडीपरिणतिमवतरति । दृष्टिः परिम्लानप्रायां कमलिनीमनुवदति, इतीत्थमियं नायिका माधुर्यं स्पृशति तनुत्वं च भजति । अत्र प्रतीच्छति–अवतरति–अनुवदति–स्पृशति इत्यादिचेतनक्रियाधर्माणामचेतनेष्वधरादिष्वध्यारोप उपचारवक्तृत्वं प्रत्याययति । अधरोऽतीवारुणः कोमलोऽपि इति वक्तव्ये अधरः अशोके वर्त्तमानकालिककिसलयानां परावृत्तिमीहते । यद्येतानि जन्मान्तरत्वमितानि स्युः । तदा मया सहोपमीयेरन् । इति नूतनोल्लेखविलक्षणत्वेनाभिधानमतिरमणीयम् । तदितोऽधरतः किसलयच्छविरपकर्षवती इति ध्वन्यते । तत्राप्यचेतनेऽधरे दीयमानग्रहणरूपप्रत्येषणक्रियाकर्तृत्वोपनिबन्धोऽतितरां विच्छित्तिमाचिनोति । परिणतताडीसौन्दर्यसंवादसुभगा कापि कपोलयोः कान्तिरवतरतीति वर्त्तमाननिर्देशेन प्रतिदिवसं परं परिपोषमासादयति । अलसा दृष्टिरित्यनभिधाय म्लानीभूतां पद्मिनीमनुवदतीयं दृष्टिरित्युक्तिः सर्वानपि औपम्यपथभ्रममाणानतिशेरते यतः पर्युषितकमलविच्छित्तिमात्मनो भावयति सचेतसां चेतसि । परप्रकर्षाभिमुखेऽपि विप्रलम्भे कदाचित्संकल्पोपस्थापितप्राणनाथायां दृष्टौ कान्तिर्भवतीति प्रायःपदेन सूचितम् ।

रसमेव कवतेऽसौ उदाह्रियते । एतामिति । नदीविहारकालिकी नायकस्योक्तिः ।

---

और पुनः—इसका अधर अशोक के पल्लवों की लालिमा को अपनी लालिमा से उलटा देना चाहता है । कपोल अपनी पांडुता से पके ताल-फल की पांडुता को नीचा कर रहा है । और आँखें अपनी सुन्दरता से कमलिनी को मुरझाई हुई सी कर रही हैं ।

इससे यह मानिनी प्रिया मधुरता तथा कृशता को प्रकाशित कर रही है ।

जो केवल रसमयी कविता करता है वह रसकवि कहाता है । जैसे—एतामिति । नदी पर विहार करते समय नायक नायिका से कहता है—हे तनूदरि ! इस ताम्रपर्णी नदी

यस्याः पयांसि परिणाहिषु हारमूर्त्या वामभ्रुवां परिणमन्ति पयोधरेषु ॥'

मार्गकविः—

'मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः
सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च ।

---

हे तनूदरि ! अयि कृशोदरि ! एतां ताम्रपर्णीमेतन्नाम्नीं नदीं विलोकय पश्य । अम्भांसि निधीयन्तेऽस्मिन् समुद्रे विवृतेभ्यः शुक्तिपुटेभ्यः समयाद्विकासितेभ्यः शुक्तिकासमुद्गकेभ्यः उद्धृतानि उत्थापितानि, यस्यास्ताम्रपर्ण्याः पयांसि जलानि । समुद्रगतशुक्तिमध्यपतितत्वेन मौक्तिकतां गतानि हारार्थमुद्धृतानि इत्यर्थः । वामभ्रुवां सुन्दरभ्रुकुटीनां रमणीनां परिणाहिषु विशालेषु पयोधरेषु स्तनेषु हारमूर्त्या हाररूपेण परिणमन्ति परिणतिं प्राप्नुवन्ति । अत्र तनूदरीविषयकनायकनिष्ठा रतिः दुग्धदध्यादिन्यायेन संभोगश्रृङ्गाररसतां प्राप्ता प्रतीयते । हे तनूदरीत्यत्र तनूदरी आलम्बनविभावः । परिणाहिपयोधरा उद्दीपनविभावः । ताम्रपर्णीनदीवर्णनमनुभावः । तद्गम्यं विहरणौत्सुक्यं व्यभिचारिभावः इति ज्ञेयम् ।

मार्ग्यन्तेऽन्वेष्यन्ते गुणा अस्मिन्निति मार्गो रीतिः । तमेव कवते वर्णयति यः सः मार्गकविरुदाहियते । मूलमिति । बालकाश्च ता वीरुधश्चेति तासां बालकवीरुधां कोमललतानाम् । ('लता प्रतानिनी वीरुद्' इत्यमरः ।) मूलं बीजम् । जात्यास्तरवः जातीतरवस्तेषां मालतीवृक्षाणाम् । ('सुमना मालती जाती' इत्यमरः)। सुरभयः सुगन्धयस्त्वचः । चन्दनशाखिनां मलयजतरूणां सारः परिमलः । अशोकस्यार्द्राणि

---

को देखो । जिस नदी का जल समुद्र की शुक्तियों में मोती बनकर सुन्दरियों के विशाल स्तनों पर हार बन जाता है ।

यहां पर तनूदरीविषयक नायक का प्रेम ( रति ) है । वही प्रेम पुष्ट होकर श्रृङ्गार रस हो गया है । तनूदरी आलम्बन विभाव है । परिणाही पयोधर और एकान्त नदी-तट उद्दीपन विभाव हैं । तद्गम्य विहरणौत्सुक्य व्यभिचारी भाव है ।

जो केवल मार्ग ( रीति ) विषयक कविता करता है वह मार्गकवि कहाता है । जैसे—

किसी मित्र या स्वामी के ऊपर अगर किसी तरह की विपत्ति आ जाय तो साथियों को उनकी सहायता करनी चाहिए, इस बात को लक्ष्य करके ग्रीष्म ऋतु ने जले हुए कामदेव को उसकी तापशान्ति के लिए यह द्रव्यसमुदाय दिया, जिसमें कोमल लताओं के

शैरीषी कुसुमोद्गतिः परिणमन्मोचं च सोऽयं गणो
श्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥'

शास्त्रार्थकविः—

'आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।

---

प्रत्यग्राणि किसलयानि नूतनदलानि च। शैरीषी शिरीषसम्बन्धिनी कुसुमोद्गतिः प्रसूनसमुद्भवः। शिरीषपुष्पाणि चेत्यर्थः। परिणमत् पाकं गच्छन्मोचं कदली च। सोयं पूर्वोक्त ऊष्महरो गणः ग्रीष्मेण ग्रीष्मर्तुना पुरा दग्धाय हरक्रोधाग्निज्वलिताय पञ्चेषवे ददे दत्तः।

अत्र 'कोमलवर्णासमासयोः' 'वीरु' 'सुर' 'सार' 'गण' परिणमन' इत्यत्र ह्रस्वान्तरितयो रेफणकारयोः 'लं' 'धां' 'न्दं' 'चन्न' 'पञ्च' इत्यादिमूर्धस्थानुस्वारस्य च रचनया वैदर्भीरीतिघटितं पद्यम्।

शास्त्रीयं पदार्थं कवते वर्णयति यः स उदाहियते। ※आत्मारामा इति※। वेणीसंहारनाटकीयं पद्यम्। श्रीकृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा, 'आर्य किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति', इति पृच्छन्तं सहदेवं प्रति भीमस्योक्तिः। मोहेनाज्ञेनान्धः वस्तुतत्त्वप्रतिपत्तिरहितः अयं दुर्योधनः पुराणं प्रकृतेरपि प्राग्वर्त्तिनं तममुं देवं श्रीकृष्णं कथं वेत्ति केन प्रकारेण जानातीति सम्बन्धः। तं कम्। यं श्रीकृष्णमात्मनि आत्मन्नि प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्ति। यद्वा आत्मैवारामः क्रीडास्थानं येषां ते योगिनः निर्विकल्पे वेद्यावभासशून्ये समाधौ विहिता रतिर्यैस्तादृशाः। ज्ञानस्यात्मसाक्षात्कारस्य उद्रेकात् रजस्तमसी अभिभूय सत्त्वाविर्भावात् विघटितस्तमोग्रन्थिर्यैस्तादृशाः, नाशितमिथ्याज्ञानजन्यसंस्काराः सत्त्वनिष्ठाः सत्त्वद्रव्यमात्रनिष्ठाः सन्तः यं कमपि वाङ्मनोगोचरं दीक्षन्ते पश्यन्ति साक्षात्कुर्वन्तीत्यर्थः। कथं योगिभिरेव दर्शनीयः स इति

---

खाज, मालती का सुगन्धित वल्कल, चन्दन का सार, अशोक के हरे-हरे पत्ते, शिरीष के पुष्प और पके हुए केले हैं।

यहां पर कोमल वर्ण और असमास तथा ह्रस्वान्तरित रेफ और णकार और 'ल' 'ध' 'न्द' 'चञ्च' 'पञ्च' इत्यादि मूर्धस्थ अनुस्वारों की रचना से वैदर्भी रीति-घटित पद्य प्रतीत होता है।

जो शास्त्रीय पदार्थ की कविता करता है वह शास्त्रकवि कहलाता है, जैसे—वेणीसंहार नाटक में दुर्योधन श्रीकृष्ण को बांधने की चेष्टा करता है। ऐसा सुनकर सहदेव

यं वीक्षन्ते कमपि तपसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥'

एषां द्वित्रैर्गुणैः कनीयान्, पञ्चषैर्मध्यमः, सर्वगुणयोगी महाकविः। दश च कवेरवस्था भवन्ति। तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त तिस्रश्च

---

हेतुगर्भं यत्पदार्थविशेषणमाह—*तमसामिति*। तमसां तामसानां ज्योतिषां राजसानां वा परस्तात् वर्त्तमानमिति। रजस्तमोऽभिभूतैरलभ्यमित्यर्थः। अत्र आत्मारामनिर्विकल्पादिशब्दा योगशास्त्रीया एव निबद्धाः। एवमन्यत्रापि शास्त्रीयशब्दबन्धेषु ज्ञेयमस्यैवोदाहरणम्।

ननु पूर्वोक्तैकादशकविभेदेषु कश्चिदस्ति मिथस्तरतमभाव उत समाना एवेति जिज्ञासमानमाह—'*एषामिति*! एषां पूर्वोक्तानामेकादशकवीनां मध्ये द्वाभ्यां त्रिभिर्वा गुणैः शब्दालंकाररचनामयैः विशिष्टः कनीयान् अधमः। पञ्च वा षड् वा परिमाणं येषां तैः पंचषैः गुणैर्युक्तः मध्यमः। सर्वैर्गुणैर्युज्यतेऽसौ महान्तम् अर्थराशिं कवते वर्णयति यः स महाकविः।

रचनायामपि मध्यमाधमभावो भवतीति दर्शयितुमाह—*दशेति*। कवेः काव्यनिबद्धाः दश अवस्था भवन्ति तत्र। दशावस्थानां मध्ये बुद्धिमांश्चाहार्यबुद्धिश्चेति तयोः सारस्वताभ्यासिकयोः सप्तावस्था भवन्ति। औपदेशिकस्य दुर्बुद्धेः तिस्रोऽवस्थाः सन्ति, यद्यप्यत्र अवस्थानामेव निर्देशावसरस्तासामेव प्रसंगात्, तथापि धर्म-

---

भीम से पूछता है—हे आर्य्य! क्या यह दुरात्मा दुर्योधन श्रीकृष्ण को साक्षात्परब्रह्म नहीं समझता है जो इनको बाँधना चाहता है। तब भीम उत्तर देता है—

समस्त विषयग्राम से इन्द्रियों को हटाकर जिन्होंने आत्मा में अपनी लौ लगा रक्खी है, और भेदावभासरहित समाधि में जिनका प्रेम है। आत्मा के साक्षात्कार से रज एवं तम के दब जाने पर जिनकी अज्ञानजन्य ग्रन्थियाँ टूट गई हैं और जो केवल सत्त्वनिष्ठ हैं वे योगी लोग भी जिसको तम और ज्योतियों से भी दूर देखते हैं, उस पुरातन देव कृष्ण को यह मोहान्ध पामर कैसे जान सकता है!

यहां योगशास्त्र के पदार्थों का वर्णन किया गया है।

इन कवियों में जिसमें दो या तीन गुण हैं वह कनीयान्, जिसमें पांच या छ गुण हैं वह मध्यम और जो सम्पूर्ण गुण-सम्पन्न है वह महाकवि कहाता है। दस प्रकार की कवि की अवस्थाएं होती हैं जिनमें बुद्धिमान् और आहार्यबुद्धि की सात तथा औपदेशिक की तीन अवस्थाएँ होती हैं।

औपदेशिकस्य। तद्यथा—काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी, सेविता, घटमानः, महाकविः, कविराजः, आवेशिकः, अविच्छेदी, संक्रमयिता च। यः कवित्वकामः काव्यविद्योपविद्याग्रहणाय गुरुकुलान्युपास्ते स विद्यास्नातकः। यो हृदय एव कवते निह्नुते च स हृदयकवि, यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सोऽन्यापदेशी। यः प्रवृत्तवचनः पौरस्त्यानामन्यतमच्छायामभ्यस्यति स सेविता। योऽनवद्यं कवते न तु प्रबध्नाति स घटमानः। योऽन्यतरप्रबन्धे प्रवीणः

---

स्यान्यथानुपपत्त्या धर्मिणमेव ज्यायांसं मत्वा तद्भेदानेव दर्शयति—*तद्यथेति। यः कवित्वस्य कामो यस्यासौ काव्यस्योपयोगिनी विद्या आन्वीक्षिक्यादिचतस्रः, उपविद्याः चतुःषष्टिकलाः ग्रहीतुं गुरूणां कुलानि सेवते स काव्यविद्यायां स्नातक आप्लुतव्रती। काव्यविद्याः समाप्य स्नानकर्त्ता तत्पदव्यपदेश्यो भवति इत्यर्थः। यः स्वहृदय एव लज्जाविनयादितः इति भावः। कवते पदार्थं वर्णयति। निह्नुते गोपायति च स हृदयकविः यः स्वकीयमपि कवित्वं दोषाशङ्कयाऽन्यस्यैव कस्यचिदिति अपदेशं कृत्वा पठति जनानां समक्षं स कविरन्यापदेशी। प्रवृत्तं काव्यघटनानुकूलं वचनं वाक्यं यस्यैवंभूतो यः प्राचीनानां कवीनां मध्ये अन्यतमकस्यैकस्य भावं गृहीत्वा काव्यं कर्तुं पुनः पुनः प्रवर्त्ततेऽसौ सेविता। यः शुद्धान् पदार्थरसभावादीन् सुघटयितुं जानाति तान् वर्णयति वा, न तु ग्रन्थघटकीकरोति ग्रन्थरूपेण वा स्थापयति स घटमानः। यो गद्यपद्यान्यतरग्रथने प्रवीणो दक्षः स महाकविः। यस्तु तत्र तत्र

---

धर्म ( अवस्था ) भेद से धर्मी का भेद कहते हैं। काव्यविद्यास्नातक वगैरह दश[1] कवि होते हैं। कविता की इच्छा से जो काव्य विद्या पढ़ने के लिए गुरुकुल की सेवा करता है वह 'काव्यविद्यास्नातक' कहाता है। जो हृदय ही में कविता करता है किन्तु छिपाता है वह 'हृदयकवि' कहाता है। जो अपने ही काव्य को दोषभय से दूसरे किसी का है—ऐसा व्याज करके समुदाय में पढ़ता है वह 'अन्यापदेशी' है। जो प्राचीन कवियों में से किसी एक के भाव को लेकर कविता बनाने का अभ्यास करता है वह 'सेविता' कहाता है। जो निर्दोष कविता कर सकता है किन्तु रचना नहीं करता है वह घटमान कहाता है। जो गद्य-पद्यान्यतर रचना में प्रवीण हो अथवा कविता कर सकनें में और उसको

---

१. राजशेखर ने काव्यविद्यास्नातक वगैरह दश ही कवि बतलाते हैं। परन्तु दश की जगह एकादश कवि बतलाना चाहिये। अन्यथा व्यङ्ग्यकवि छूट जाता है, जो कि कवियों में प्रधान लक्ष्य एवं प्राण है। रसकवि में व्यंग्यकवि की गणना नहीं कर सकते क्योंकि रस भी व्यङ्ग्य का एक भेद है।

स महाकविः। यस्तु तत्र तत्र भाषाविशेषे तेषु तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स कविराजः। ते यदि जगत्यपि कतिपये। यो मन्त्राद्युपदेशवशाल्लब्धसिद्धिरावेशसमकालं कवते स आवेशिकः। यो यदैवेच्छति तदैवाविच्छिन्नवचनः सोऽविच्छेदी। यः कन्याकुमारादिषु सिद्धमन्त्रः सरस्वतीं सङ्क्रामयति स सङ्क्रामयिता।

सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति। 'कः पुनरयं

---

पिशाचीशौरसेनीमागध्यादिभाषाविशेषे गद्यपद्यचम्पूप्रभृतिषु ग्रन्थेषु तस्मिंस्तस्मिंश्च शृङ्गारादिरसे स्वतन्त्रः तत्तद्विषयकरचनायां स्वाधीनः स कविराजः। ते यदि जगति संभाव्येरन् तर्हि कतिपये द्वित्राः। अपिशब्दः संभावनायाम्। मन्त्रादीत्यादिशब्देन तन्त्रगुरुप्रसादर्षिदेववरदानानि ग्राह्याणि। य आवेशसमकालं यदाभिनिवेशस्तस्मिन्काले कवते स आवेशिकः। यस्मिन्काले वाञ्छति तस्मिन्नेव काले प्रावाहिकं कवते असावविच्छेदी। कन्याकुमारादिषु आदिशब्दात्कामाख्याप्रभृतिसिद्धपीठेषु सिद्धमन्त्रः कृतजपः सन् वाग्देवीं संक्रामयति स्वस्मिन्स्थापयति स संक्रामयिता।

इत्थं कवीनां स्थूलसूक्ष्मभेदान्प्रदर्श्य तत्कृतरचनायाः अर्थगाम्भीर्यस्वरूपं प्रौढिभावं व्याचिख्यासुराह—*सततमिति*। अयमत्र भावः। व्युत्पत्तिप्रतिभे काव्यकारणे काव्यबीजम् इति पूर्वमुक्तम्। तयोर्बीजत्वेन काव्यस्यापि फलत्वमर्थात् सिद्धम्। तथा चाम्रादिफले यादृशी परिणतिः सहृदयैरनुभूयते फलसाधारण्यात् किं तादृशी वान्यादृशी वेति स्वपरमतेन विवेक्तुमुत्तरं वाक्यमवतारयति। निरन्तरं पौनःपुन्येन प्रवृत्तिकारणात् पदानामावापोद्वापाभ्यां सन्निवेशेनाभ्यासकारणात् कवयितुर्वाक्यं पाकमाप्नोति। ननु विक्लित्त्यनुकूलव्यापारे पच्धात्वर्थे सिद्धावस्थां प्राप्ते सति यद्भवति स एवायं पाक उत अन्य इत्यभिप्रायेणाशङ्कन्ते। *कः* इति। मङ्गलोक्त्या

---

ग्रन्थरूप में करने में भी जो निपुण हो वह 'महाकवि' कहाता है। जो सब भाषाओं में और सब प्रबन्धों में तथा सब रसों में अर्थात् उनकी रचना करने में स्वतन्त्र हो वह 'कविराज' होता है। ऐसे शायद ही संसार में एक या दो होंगे। मन्त्र, तन्त्र, गुरु के प्रसाद एवं ऋषि और देव-वरदान से जिसने सिद्धि प्राप्त कर ली है किन्तु आवेशावस्था में कविता करता है वह 'आवेशिक' कहाता है। जो जब चाहे तभी निरवच्छिन्न कविता कर सकता है वह 'अविच्छेदी' कहाता है। कन्याकुमारी और कामाख्या और सिद्धपीठों में मन्त्रसिद्धि करके जो सरस्वती को अपने में संक्रान्त करता है वह 'संक्रामयिता' है।

इस तरह धर्म ( अवस्था ) भेद से धर्मी का भेद बतला चुकने पर उनकी बनाई हुई कृति की 'परिणामवस्था बतलाते हैं। निरन्तर अभ्यास करने से सुकवियों के वाक्य

पाकः ?' इत्याचार्याः। 'परिणामः' इति मङ्गलः। 'कः पुनरयं परिणामः ?' इत्याचार्याः। 'सुपां तिङां च श्रवः सैषा व्युत्पत्तिः' इति मङ्गलः। सौशब्द्यमेतत्। 'पदनिवेशनिष्कम्पता पाकः' इत्याचार्याः। तदाहुः—

'आवापोद्धरणे तावद्यावद्दोलायते मनः।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥'

---

उत्तरयति ॐपरिणाम इतिॐ। पाकपरिणामयोः पर्यायबुद्ध्या पुनः प्रश्नः। ॐकः पुनरितिॐ। पुनः मङ्गलवाचा प्रतिवदति। ॐसुपामितिॐ सुपां सुबन्तानां तिङां तिङन्तानां च पदानां श्रवः श्रुतिः संस्कारः इति यावत्। सैषा व्युत्पत्तिः विशिष्टा उत्पत्तिः। चादि विना रचनासौन्दर्यसमर्पकतया नमस्कारकारित्वमित्यर्थः। अयमेव वृन्ताकपाकः प्राक्तनैरुच्यते यदुक्तम्—

सुप्तिङ्संस्कारसारं यत् क्लिष्टवस्तुगुणं भवेत्।
काव्यं वृन्ताकपाकं स्याज्जुगुप्सन्ते जनास्ततः ॥ इति।

ननु भवदुक्ता व्युत्पत्तिः, 'व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता' इत्युक्तलक्षणः सुशब्दाख्यो गुण एव न तु पाक इत्याशयेनाह—ॐसौशब्द्यमितिॐ। कस्तर्हि पाक इति प्रतिवदन्त्याचार्याः—ॐपदेतिॐ। पदस्य सुप्तिङन्तरूपस्य निवेशने रचने निष्कम्पता स्थैर्यं पाकः पाकशब्दवाच्य इति।

तदाहुरिति प्रतिपादितेर्थे प्रावादुकपद्यं प्रमाणयति—ॐआवापेतिॐ। तावत्कालमेव, आवापः सन्दर्भानुकूलपदनिवेशनम्। स च। उद्धरणं चेति आवापोद्धरण आधानापसारणे, यावत् एतादृशं पदं प्रयोगयोग्यं वा एतादृशमित्येवं मनसो दोलाचाञ्चल्यं जायते। पदानां स्थैर्ये निष्कम्पतायां स्थापिते कृते सति, स्थैर्ये सत्येव एवमन्यत्पदं नास्तीति सहृदयानां व्यवहारो जायते इति भावः। हन्त हर्षे, सरस्वती वाग्देवी सिद्धा। एवमस्मिन्मते पूर्वापेक्षया किञ्चिदुत्कृष्टो बदरपाक एव पाकाभिधेयः।

---

परिपक्व होते हैं। इस पर आचार्यों की विप्रतिपत्ति दिखलाते हुए प्रश्नोत्तर क्रम से पाक के स्वरूप का निर्णय करते हैं। प्र०-यह पाक क्या है ? उ०-परिणाम। प्र०-परिणाम किसे कहते हैं ? उ०-सुबन्त एवं तिङन्त पदों की ( संस्कारस्वरूप ) व्युत्पत्ति को परिणाम कहते हैं। खण्डन ! यह परिणाम नहीं है; यह सौशब्द्य नामक गुण है। अतः पदों के विन्यास करने में जो चित्त की स्थिरता है, उसे पाक कहते हैं। जैसा कि कहा है—

जब तक मन में चाञ्चल्य है, तभी तक पदों का रखना और हटाना होता है। जब पदों के विन्यास करने में स्थिरता आ गई; बस, तब सरस्वती सिद्ध हो गई।

'आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाकः' इति वामनीयाः । तदाहुः—

'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥'

'इयमशक्तिर्न पुनः पाकः' इत्यवन्तिसुन्दरी । यदेकस्मिन्वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान् भवति, तस्माद्रसोचितशब्दार्थ-सूक्तिनिबन्धनः पाकः । यदाह—

---

वामनमतं निर्दिशति । आग्रहो न्यासः । परिगतो ग्रहो ग्रहणं यस्मादिति परिग्रहोऽपसारणम् । तस्मादपि पदानां स्थैर्यं भवति । अतः पदानां परिवृत्तेः वैमुख्यं पर्यायपरिवर्तनासहत्वं पाकः पाकाभिधेयः ।

तदाहुरिति उपष्टम्भकं शास्त्रवाक्यमवतारयति—*यत्पदानीति* । यत् इति अव्ययम् यत् पाके पदादि । परिवृत्तिं पर्यायशब्दोपस्थितिं सहन्ते इति सहिष्णव-स्तेषां भावस्तत्ता तां त्यजन्ति एव सर्वथा पर्यायशब्देनोपस्थापनवैमुख्यं कुर्वन्ती-त्यर्थः । तं पाकं शब्दानां न्यासे निष्णाताः कुशलाः पण्डिताः शब्दपाकं प्रचक्षते कथयन्ति । एवमस्मिन्मते नालिकेरीपाकः पाकाभिधेयोऽर्थः ।

परमतेन खण्डयति *इयमिति* । यच्छब्दाः परिवृत्तिं न सहन्ते तदियं कव-यितुरशक्तिसामर्थ्यमेव किन्तु न पाकः । इति अवन्तिसुन्दरी । एतन्नाम्नी चौहाणवं-शोद्भवा राजशेखरपत्नीत्यैतिह्यम् । हेतुं दर्शयति *यदिति* । यद् यतः एकस्मिन् वर्णनीये वस्तुनि पदार्थे महाकवीनामनेकोऽपि पाठः परिपाकवान् भवति । कस्तर्हि पाक इत्याकाङ्क्षायां वक्ति *तस्मादिति*। पूर्वोक्तहेतोः रसयोग्यस्य शब्दस्य अर्थस्य सुभाषितानां च निबन्धनं यत्र भवति स पाकः काव्यपाक इत्यर्थः ।

यदाहेति परोक्तं लक्षणं संवदति । येन पाकेन विदुषां; गुणानाम्, अलंकाराणाम्, रीतीनाम्, उक्तीनाम्, शब्दानाम्, अर्थानाम्, रचनापरिपाटी स्वदते आनन्दयति स

---

रखने और हटाने से भी पदों के विन्यास में स्थिरता होती है । अतः पदपरिवृत्ति-वैमुख्य का नाम पाक है । ऐसा वामन का मत है । जैसा कि कहा है—

जो पद पर्यायपरिवृत्ति को सहन नहीं करते हैं उसको शब्दन्यासकर्त्ता पण्डित शब्दपाक कहते हैं ।

अवन्तिसुन्दरी का मत है कि यह पाक नहीं हो सकता किन्तु यह कवि की अशक्ति है; क्योंकि एक विषय में महाकवियों के अनेक पाठ परिपक्व होते हैं । इसलिए रसोचित शब्दार्थों की रचना को पाक कहते हैं । जैसा कहा भी है—

'गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः ।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति ॥'

तदुक्तम्—'सति वक्तरि सत्यर्थे शब्दे सति रसे सति ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥'

'कार्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोऽभिधाविषयस्तत्सहृदयप्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ' इति यायावरीयः । स च कविग्रामस्य

---

मां प्रति मन्मते वाक्यस्य पाकः काव्यस्य पाकः । एवमस्मिन् मते सहकारपाकः पाकाभिधेयः । तदुक्तम्—

गुणस्फुटत्वसाकल्ये काव्यपाकं प्रचक्षते । चूतस्य परिणामेन स चायमुपमीयते ॥

तदुक्तमिति । अस्य सकललावण्यशालितया कविकुलशीलनीयतामालपति । ॐसतीतिॐ । सच्छब्दोऽत्र साध्वर्थः । 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरोक्तेः । वक्तरीत्यादीनि सतिसप्तम्यन्तानि बोध्यानि । वक्तरि कवयितरि, अर्थे नूतनोल्लिखिते पदार्थे अनुशिष्टे शब्दे रसे च सति साधौ सत्यपि येन विना वाचां मधु न परिस्रवति न स्यन्दते, तद्वाक्यपाकनामकं किमपि वस्तु अस्ति ।

इत्थं पाकविषये परमतान्यनूद्य स्वमतं दर्शयति—ॐकार्येतिॐ । परं केवलं कार्येण काव्यरूपेण तेन अनुमेयः अनुमातुं योग्यः । तस्य भावस्तत्ता तया अत एव यत्तच्छब्दाभ्यां निवेद्यः प्रतिपाद्यः यादृग्घटनापरिपाटीविशिष्टं काव्यं तादृशः पाकः पाकशब्देन अभिधातुं योग्यः । इदं तत्त्वम् । यत्र पदानां परिवृत्त्यसहिष्णुता वर्त्तते तत्काव्यं पदपाकयुक् । यत्र गुणालङ्कारादीनां सुन्दरो रचनाक्रमः तत्काव्यं वाक्यपाकयुक् भवति । तत्तस्मात् सहृदयानां भावकानां प्रसिद्धया सिद्धो निष्पन्नः अर्थात् यत्र सहृदयानां तत्तत्पाकपदवाच्यत्वप्रकारिकोपस्थितिर्जायतेऽसौ व्यवहाराङ्गं सहकारनालिकेरादिपाकपदव्यपदेशे बीजम् । इति ग्रन्थकृतः स्वोऽभिप्रायः ।

---

जिस पाक के द्वारा गुण, अलंकार, रीति, शब्द एवं अर्थ की रचना विद्वानों को आनन्द देती है वह मेरे मत से वाक्यपाक कहाता है ।

इसमें प्रमाण है । वक्ता भी बहुत योग्य है, अर्थ भी बहुत सुन्दर है, शब्द भी ललित है, और रस भी है । किन्तु इन सबके रहने पर भी एक ऐसी वस्तु है जिसके बगैर वाङ्माधुर्य नहीं है ।

अब राजशेखर अपने मत से पाक का लक्षण कहते हैं । जो केवल कार्य के द्वारा अनुमेय होने से जैसी रचना वैसा पाक इत्यादि शब्दों से कहा जा सके, वह पाक होता है । उसके व्यवहार में हृदयों की प्रसिद्धि ही कारण है । वह पाक कविता का

काव्यमभ्यस्तो नवधा भवति । तत्राद्यन्तयोरस्वादु पिचुमन्दपाकम्, आदावस्वादु परिणामे मध्यमं बदरपाकम्, आदावस्वादु परिणामे स्वादु मृद्वीकापाकम्, आदौ मध्यममन्ते चास्वादु वार्त्ताकपाकम्, आद्यन्तयोर्मध्यमं तिन्तिडीकपाकम्, आदौ मध्यममन्ते स्वादु सहकारपाकम्, आदावुत्तममन्ते चास्वादु क्रमुकपाकम्, आदावुत्तममन्ते मध्यमं त्रपुसपाकम्, आद्यन्तयोः स्वादु नालिकेरपाकमिति। तेषां त्रिष्वपि त्रिकेषु

स च पाकः काव्यं पौनःपुन्येन शीलयतः कविसमुदायस्य नवप्रकारोऽस्ति। पाकस्य नवप्रकारान् सलक्षणान् व्याख्याति ॐतत्रेतिॐ । तत्र तेषां नवप्रकारपाकानां मध्ये आद्यन्तयोः आद्यन्तावस्थायाम् अस्वादु अमधुरम् । पिचुमन्दस्य निम्बस्य । 'अरिष्टः सर्वतोभद्रहिंगुनिर्यासमालकाः। पिचुमन्दश्च निम्बे' इत्यमरः। पाक इव पाको यस्मिन् काव्ये तत् । आदौ चर्व्यमाणोऽस्वादु परिणतौ मध्यमं बदरस्य पाक इव पाको यस्मिन् यस्य वा तत्। आदौ प्रथमचर्वणायां परिणतौ च स्वादु मधुरं मृद्वीकायाः, 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः। पाक इवेति पूर्ववत्। आदौ स्वाद्वस्वादु परिणतावस्वादु वार्ताकस्येव वृन्ताकस्येव पाको यस्य तत्। आद्यन्तयोर्मध्यमम् अर्थान्मध्ये, स्वादुतिन्तिडीकस्येव चुक्रस्येव। 'तिन्तिडीकं च चुक्रं च वृक्षाम्लमि'त्यमरः । सहकारोऽतिसौरभाम्रः । 'सहकारोतिसौरभः' इत्यमरः। क्रमुकः पूगः। त्रपुसं कर्कटी। नालिकेरम् प्रसिद्धम्। एवमेतेषां पिचुमन्दबदरमृद्वीकापाकानामेकस्त्रिकः। वार्त्ताकतिन्तिडीकसहकारपाकानां द्वितीयस्त्रिकः। क्रमुकत्रपुसनालिकेरपाकानां तृतीयस्त्रिकः।

अभ्यास करने वाले कवियों की रचना में नवविध होता है। उनमें पहले और अन्त में जो अस्वादु हो वह 'पिचुमन्द पाक' होता है। जो पहले अस्वादु हो और परिणाम में मध्यम हो वह 'बदरपाक कहाता' है। जो पहले अस्वादु और परिणाम में मधुर हो वह 'द्राक्षापाक' कहाता है। जो पहले मध्यम हो अन्त में अस्वादु हो उसकी संज्ञा 'वार्ताकपाक' है। जो आदि और अन्त में अस्वादु हो और मध्य में स्वादु हो उसे 'तिन्तिडीक पाक' कहते हैं। 'सहकार ( आम्र ) पाक' वह होता है जो पहले मध्यम और अन्त में मधुर हो। जो पहले मधुर और अन्त में अस्वादु वह 'क्रमुक पाक' कहाता है। आदि में उत्तम और अन्त में मध्यम हो उसका नाम 'त्रपुस ( ककडी ) पाक' है। जो पहले और पीछे मधुर होता है उसको 'नारिकेल पाक' कहते हैं। इनमें तीन २ पाकों का एक एक गण होता है। जैसे पिचुमन्द, बदर, मृद्वीका (द्राक्षा), पाकों का एक गण और वार्ताक (बैंगन), तिन्तिडीक ( इमली ), सहकार पाकों का दूसरा गण हुआ। क्रमुक ( सुपारी ), त्रपुस ( ककडी ), नालिकेर पाकों का तीसरा। इस तरह तीन गण हुए। इस प्रत्येक गण में

पाकाः प्रथमे त्याज्याः। वरमकविन पुनः कुकविः स्यात्। कुकविता हि सोच्छ्वासं मरणम्। मध्यमाः संस्कार्याः। संस्कारो हि सर्वस्य गुणमुत्कर्षयति। द्वादशवर्णमपि सुवर्णं पावकपाकेन हेमीभवति। शेषा ग्राह्याः। स्वभावशुद्धं हि न संस्कारमपेक्षते। न मुक्तामणेः शाणस्तारतायै प्रभवति। अनवस्थितपाकं पुनः कपित्थपाकमामनन्ति। तत्र पलालधूननेन अन्नकणलाभवत् सुभाषितलाभः।

---

अथैतेषामुत्तमादिभावं विभजति—ॐतेषामितिॐ। तेषां नवपाकानां मध्ये त्रिष्वपि त्रिकेषु प्रथमे पिचुमन्दवार्त्ताकक्रमुकानां पाकास्त्याज्या अग्राह्या अधमा इति। एतत्पाकानामधमत्वादेतत्पाकविशिष्टानि काव्यान्यपि अधमानीत्यर्थात्प्राप्तम्। काव्यानामधमत्वात्तादृशकाव्यकर्तॄणामप्यधमत्वं व्यङ्ग्यम्।

तादृशपाकविशिष्टकाव्यकर्तॄन्निन्दयति—ॐकुकविरितिॐ। अकविर्वरम्। किन्तु कुत्सितः कविर्न भूयात्। कवितां कर्त्तुं न जानातीति ज्ञानाभावो वरं परं कुकाव्यं न कुर्यात्, इति भावः। हेतुमुपन्यस्यति कुत्सितकवित्वं सोच्छ्वासं सजीवं मरणम्। तदुक्तम्—

नाकवित्वमधर्माय मृतये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः॥ इति।

मध्यमा बदरतिन्तिडीकत्रपुसानां पाकाः संस्कृत्य ग्राह्याः। संस्कारो हि प्रतियतनं हि। दृष्टान्तयति ॐद्वादशेतिॐ। शेषाः मृद्वीकासहकारनालिकेराणां पाकाः स्वच्छन्दं ग्राह्याः। किमत्र संस्कारोऽपेक्ष्यो न वेत्यत आह—ॐस्वभावेतिॐ। शाणः मण्यादिषु समुत्कर्षाधायको यन्त्रविशेषः। तारतायै मुक्ताशुद्धयै। 'मुक्ताशुद्धौ च तारः स्यादि'-त्यमरः। ॐअनवस्थितेतिॐ। अनवस्थितः असुनिर्भेदः स्पष्टत्वेन प्रतिपत्तिरहितः इत्यर्थः। पाको यस्मिन् काव्ये तत्काव्यं कपित्थपाकं कथयन्ति। यथाह भामहः—

अहृद्यमसुनिर्भेदं　　रसवत्त्वेऽप्यपेशलम्।
काव्यं कपित्थपाकं तत् केषाञ्चित्सदृशं यथा॥ इति।

---

पहले (पिचुमन्द, वार्ताक, क्रमुक पाक त्याज्य हैं) कवि न होना अच्छा है। किन्तु दुष्कवि होना ठीक नहीं। क्योंकि कुकवित्व सजीव मरण है। इन पूर्वोक्त पाकों में मध्य के पाक संस्कार्य हैं। संस्कार से सभी के गुण उत्कृष्ट हो जाते हैं। सुवर्ण के बारह रंग होते हैं किन्तु जब उसमें अग्नि का संस्कार हो जाय तब वह सुवर्ण सुवर्ण होता है। अवशिष्ट पाकों का आश्रय लेकर कविता करना उचित है। क्योंकि जो स्वतः शुद्ध है उसके लिए संस्कार की आवश्यकता नहीं है। शाण के द्वारा मुक्ताओं में अधिक सौन्दर्य नहीं आ सकता। जिस काव्य में किसी भी तरह का पाक नहीं उसे कपित्थपाक कहते हैं। जैसे

सम्यगभ्यस्यतः काव्यं नवधा परिपच्यते।
हानोपादानसूत्रेण विभजेत् तद्धि बुद्धिमान्॥
अयमत्रैव शिष्याणां दर्शितस्त्रिविधो विधिः।
किन्तु वैविध्यमप्येतत् त्रिजगत्यस्य वर्त्तते॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे व्युत्पत्तिकविपाकानां निरूपणे पञ्चमोऽध्यायः॥



---

ॐतत्रेतिॐ। तत्रानवस्थितपाके पलालस्य सस्यशून्यधान्यनालस्य धूननेन निष्पवनेन सुभाषितलाभः सूक्तिलाभः। यथा पलालधूननेन कदाचित् अन्नकणलाभस्तथैव तादृशकाव्यात् कदाचित् सूक्तिलाभः स्यात्।

उक्तमुपसंहरति-ॐसम्यगितिॐ। सततप्रवृत्त्या शीलयतः कवेः काव्यं नवधा परिपाकमायाति। किन्तु सर्वे पाका नानुशीलनीया इत्याह। ॐहानेतिॐ। हानञ्चोपादानञ्च तयोः सूत्रम्। तेन दोषवद्यस्तु सर्वं हेयम् गुणवत् सर्वमुपादेयमिति सूत्रेण बुद्धिमान् तत् काव्यं विविच्य पृथक्कुर्यात्।

ॐअयमितिॐ। अत्र काव्यमीमांसायां शिष्याणां कृते तेषामेव विनेयत्वात्। एतत् त्रिप्रकारमेव विधानं दर्शितम्।

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते।
प्रथमालीढमधवः पिबन्ति कटुभेषजम्॥ इति।

इति नीत्यालपमेवोक्तम्। किं बह्वपि विधानं भवतीत्याह। ॐकिन्त्वितिॐ। किन्तु त्रिजगति अस्य काव्यस्यानेकप्रकारं विधानं वर्त्तते :

॥ इति आहिताग्निश्रीमधुसूदनशास्त्रिणः कृतौ मधुसूदनीविवृतौ पञ्चमोऽध्यायः॥

---

पाल का निष्पवन करने से कदाचित् कोई अन्नकण मिल जाय, इसी तरह उसमें भी कदाचित् कोई सुन्दर सूक्ति मिल सके।

काव्य की रचना का अभ्यास करने से काव्य नवविध होता है। उसमें त्याज्य को छोड़ देना और ग्राह्य को ग्रहण कर लेना चाहिए।

यहां पर ( ग्रन्थ में ) शिष्यों को तीन ही तरह का विधान बतलाया है। किन्तु संसार में इस के बहुत तरह के प्रकार होते हैं।

॥ इति विवृतिकारकृतौ बालक्रीडायां पञ्चमोऽध्यायः॥

---

